श्रीः ।

श्रीधर्मदाससूरिप्रणीतं

# विदग्धमुखमण्डनकाव्यम् ।

स्वोपज्ञव्याख्यासमलंकृतम् ।

इदं

पणशीकरोपाह्वविद्वद्वरलक्ष्मणशर्मतनुजनुषा
वासुदेवशर्मणा संशोधितम् ।

( चतुर्थं संस्करणम् । )

तच्च

मुम्बय्यां

पाण्डुरङ्ग जावजी

इत्येतैः स्वीये निर्णयसागराख्यमुद्रणयन्त्रालये
मुद्रयित्वा प्रकाशितम् ।

शाके १८४८—सन १९२६.

मूल्यं ६ आणकाः ।

# प्रास्ताविकम्।



आपातरमणीयेऽस्मिन्संसारे निजनिजप्राक्तनानुगुणजनिमतां जातिजराभयक्लेश-
रंपरापारवश्येन दुःखोदर्केण क्वचन विदग्धमुखानामपि मानुषप्राणिनां मुखसंपद-
ानन्दोद्रेकेण मण्डयतीति विदग्धमुखमण्डनं नाम स्वनामसदृक्षार्थेनान्वर्थकं काव्य-
मेदम्। अस्य प्रणेता विद्वदग्रेसरः श्रुतपारदृश्वा श्रीमद्धर्मदाससूरिरासीत्। अयं
कविवरः कदा कतमं महीमण्डलखण्डं निजजनुर्निवासाभ्यां मण्डयामास कतिच का-
यानि प्रणिनायेति निर्णेतुं प्राचीनेतिहासकोशसाहाय्यमन्तरेण न पारयामः। अनेन
नुतरेऽप्यस्मिन्काव्ये हृद्यैः पद्यैरतीव मनोहारिणी कविचातुरी प्रकटितेति सोल्लुण्ठं
थयामः। अनेन कवयित्रा ग्रन्थोपोद्घाते चेत्थमभाणि—

'किं मेऽथवा हतखलप्रणताविह स्या-
त्स स्वीकरोति सुजनो यदि मां गुणज्ञः।
चन्द्रेण चारुचरितेन विकासितं य-
त्संकोचितं भवति किं कुमुदं तमोभिः॥
प्रीत्यै सतां तदनुभावगतावसादः
संत्यज्य गूढरचनां प्रतिभानुरूपम्।
क्षिप्रावबोधकरणक्षममीक्षितार्थं
वक्ष्ये विदग्धमुखमण्डनमप्रपञ्चम्॥' इति।

अलं प्रशस्तप्रशंसातिशयेन। अस्मिन्काव्ये प्रणेत्रा चतुरः परिच्छेदान्विधाय तत्र
क्रमेण व्यस्तजातिः, मेद्यभेदकजातिः, चित्रजातिः, प्रहेलिकाजातिः, कर्तृगुप्तम्,
कर्मगुप्तम्, करणगुप्तम्, संप्रदानगुप्तम्, अपादानगुप्तम्, मात्राच्युतकम्, इत्यादि-
विविधकाव्यप्रकारा यथायथं संदर्भिताः सन्तीत्येतत्काव्यं व्युत्पित्सूनां नैकशो भिन्नका-
व्यरचनाप्रकारजातबोधनेनातीवोपकारकं स्यादिति निर्विवादम्। नहि कस्यचित्केवल-
स्तुतिस्तोत्रवाग्जालेन ग्रन्थप्रागल्भ्यं चेतश्चमत्कृत्युत्पादकं भवति। तच्च ग्रन्थालोचनस-
कालमेव स्यादित्येतत्सकृत्संप्राप्यालोचनीयमिति काव्यरसिकान्गुणज्ञान्विज्ञापयति—

पणशीकरोपाह्वविद्वद्वरलक्ष्मणशर्मसूनुः

वासुदेवशर्मा।

# अनुक्रमणिका।



समाप्तेयं विषयानुक्रमणी ॥

---

श्रीः ।

श्रीधर्मदाससूरिविरचितं

# विदग्धमुखमण्डनकाव्यम् ।

## सटीकम् ।



### प्रथमः परिच्छेदः ।

सिद्धौषधानि भवदुःखमहागदानां
पुण्यात्मनां परमकर्णरसायनानि ।
प्रक्षालनैकसलिलानि मनोमलानां
शौद्धोदनेः प्रवचनानि चिरं जयन्ति ॥ १ ॥

जयन्ति सन्तः सुकृतैकभाजनं परार्थसंपादनसद्व्रतस्थिताः ।
करस्थनीरोपमविश्वदर्शिना जयन्ति वैदग्ध्यभुवः कवेर्गिरः ॥ २ ॥

आक्रान्तेव महोपलेन मुनिना शप्तेव दुर्वाससा
सातत्यं बत मुद्रितेव जतुना नीतेव मूर्च्छां विषैः ।
बद्धेवातनुरज्जुभिः परगुणान्वक्तुं न शक्ता सती
जिह्वा लोहशलाकया खलमुखे विद्धेव संलक्ष्यते ॥ ३ ॥

इहानेके सत्यं सततमुपकारिण्युपकृतिं
कृतज्ञाः कुर्वन्तो जगति निवसन्त्येव सुधियः ।
कियन्तस्ते सन्तः सुकृतपरिपाकप्रणयिनो
विना स्वार्थं येषां भवति परकृत्यव्यसनिता ॥ ४ ॥

एषोऽञ्जलिः सममसज्जनसज्जनौ तौ
वन्दे नितान्तकुटिलप्रगुणस्वभावौ ।
एकं भियाभिनवसंहितवैरिभावं
प्रीत्या परं परमनिर्वृतिपात्रभूतम् ॥ ५ ॥

किं मेऽथवा हतखलप्रणताविह स्या-
त्स स्वीकरोति सुजनो यदि मां गुणज्ञः ।
चन्द्रेण चारुचरितेन विकासितं य-
त्संकोचितं भवति किं कुमुदं तमोभिः ॥ ६ ॥

प्रीत्यै सतां तदनुभावगतावसादः
संत्यज्य गूढरचनां प्रतिभानुरूपम् ।

क्षिप्रावबोधकरणक्षममीक्षितार्थं
वक्ष्ये विदग्धमुखमण्डनमाधवाख्यम् ॥ ७ ॥

यद्यस्ति सभामध्ये स्थातुं वक्तुं मनस्तदा सुधियः ।
ताम्बूलमिव गृहीत्वा विदग्धमुखमण्डनं विशत ॥ ८ ॥

## उद्देशकम् ।

प्राहुर्व्यस्तं समस्तं च द्विर्व्यस्तं द्विःसमस्तकम् ।
तथा व्यस्तसमस्तं च द्विर्व्यस्तकसमस्तकम् ॥ ९ ॥
सद्विःसमस्तकव्यस्तमेकालापं प्रभिन्नकम् ।
भेद्यभेदकमोजस्वि सालंकारं सकौतुकम् ॥ १० ॥
प्रश्नोत्तरसमं पृष्टप्रश्नं भग्नोत्तरं तथा ।
आदिमध्योत्तराख्ये द्वे अन्त्योत्तरमतः परम् ॥ ११ ॥
कथितापह्नुतिं चैव विषमं वृत्तनामकम् ।
नामाख्यातं च तार्क्ष्यं च सौत्रं शाब्दीयशास्त्रजे ॥ १२ ॥
वर्णवाक्योत्तरे तद्वच्छ्लोकोत्तरमतः परम् ।
खण्डपादोत्तरे चक्रं पद्मं काकपदं तथा ॥ १३ ॥
गोमूत्रीं सर्वतोभद्रं गतप्रत्यागतं बहु ।
वर्धमानाक्षरं तद्वद्धीयमानाक्षरं तथा ॥ १४ ॥
शृङ्खलां नागपाशं च चित्रं संशुद्धमेव च ।
प्रहेलिकां तथा हृद्यं कालसारादिवर्णितम् ॥ १५ ॥
अजमारादिकं गूढं पदपादार्थगूढकम् ।
स्तुतिनिन्दां तथा व्यर्थं सहापह्नुतिबिन्दुमत् ॥ १६ ॥
क्रियाकारकसंबन्धगुप्तान्यामन्त्रितस्य च ।
गुप्तं तथा समासस्य लिङ्गस्य वचनस्य च ॥ १७ ॥
मात्राबिन्दुविसर्गाणां च्युतकान्यक्षरस्य च ।
स्थानव्यञ्जनयोश्चापि च्युतदत्ताक्षरं तथा ॥ १८ ॥

## लक्ष्योद्देशकम् ।

पृष्टं पदविभागेन केवलेनैव यच्चुचेत् ।
विदुर्व्यस्तं समस्तं यत्समुदायेन पृच्छति ॥ १९ ॥

पृष्टमिति । पृथक् पृच्छयते तत् व्यस्तं पृष्टम् ॥

पूजायां किं पदं प्रोक्तमस्त्रनं को बिभर्त्युरः ।
क आयुधतया ख्यातः प्रलम्बासुरविद्विषः ॥ २० ॥

सुनासीरः ॥ सुः पूजायाम् । ना पुरुषः । सीरी हलम् ॥

किं दुराढ्यस्य मोहाय का प्रिया सुरविद्विषः ।
पदं प्रश्नवितर्के किं को दन्तच्छदभूषणम् ॥ २१ ॥

रामानुरागः ॥ राः धनम् । मा लक्ष्मीः । नु इति वितर्के । रागः आरक्तत्वम् ॥

इति व्यस्तजातिः ।

अपि सेविता द्विजिह्वैः कदापि के यान्ति न विकारम् ।
विच्छिद्यमानतनवः स्वगुणैरधिकं विराजन्ते ॥ २२ ॥

मलयतरवः ॥ समुदायेन पृच्छ्यते तत्समस्तं पृष्टम् । मलयतरवश्चन्दनवृक्षाः ॥

अनिभृतकोकिलनिःस्वनमुखरितसहकारकाननः पुंसाम् ।
को हरतितरां हृदयं मधुकरझंकारिकह्लेलिः ॥ २३ ॥

मधुसमयः ॥ मधोर्वसन्तस्य समयः कालः ॥

इति समस्तजातिः ।

व्यस्तं समस्तमथवा समासपदभङ्गतः ।
द्विःपृष्टं यत्तदेव स्याद्विर्व्यस्तं द्विःसमस्तकम् ॥ २४ ॥

द्विवारं पृथक् पृच्छ्यते तद्विर्व्यस्तं पृष्टम् ॥

वर्षासु का भवति निर्मधु कीदृगब्जं
शेषं बिभर्ति वसुधासहितं क एकः ।
आमन्त्रयस्व धरणीधरराजपुत्रीं
को वास्ति भस्मनिचिताङ्गजनाश्रयः स्यात् ॥ २५ ॥

कालिकापालिकमठः ॥ कालिका श्यामता । अपगता अलयो भ्रमरा यस्मा-
त्तदपालि भ्रमररहितम् । के पानीये मठः स्थानं यस्य सः कमठः कच्छपः । हे कालि
हे पार्वति, कपालैर्नरमुण्डैर्विराजते कापालिको योगी तस्य मठः प्रसिद्धः ॥

कीदृशं वद मरुस्थलं मतं द्वारि कुत्र सति भूषणं भवेत् ।
ब्रूहि कान्त सुभटः सकार्मुकः कीदृशो भवति कुत्र विद्विषाम् २६

अवारितोरणे ॥ न विद्यते वारि जलं यस्मिन् तद् अवारि । तोरणे सति ।
'बहिर्द्वारं तु तोरणम्' । रणे संग्रामे अवारितः न वारयितुं शक्यत इत्यवारितः ॥

इति द्विर्व्यस्तजातिः ।

पक्षिश्रेष्ठसखीपभूसुरा वाच्याः कथं वद ।
ज्येष्ठे मासि गताः शोषं कीदृश्योऽल्पजला भुवः ॥ २७ ॥

विप्रराजीवकुलीराः ॥ द्विवारं समुदायेन पृच्छ्यते तद् द्विःसमस्तं ज्ञेयम् ।

विः पक्षी । वरं श्रेष्ठम् । आली सखी । नकुली नकुलस्त्री । इरा मदिरा । विवरेषु छिद्रेषु आलीनाः प्रविष्टाः कुलीराः जलचरजीवविशेषाः यासु ताः ॥

विश्वंभराप्रलम्बघ्नव्रीहिमानुषसंयुताः ।
कथं वाच्या भवन्त्येता दिनान्ते विकसन्ति काः ॥२८॥

कुवलयवनराजयः ॥ कुः पृथ्वी । वलो बलभद्रः । बवयोरैक्यम् । यवो धान्यभेदः । नरो मनुष्यः । आजिः संग्रामः । कुवलयानां कमलानां वनानां राजयः पङ्क्तयः ॥

इति द्विःसमस्तजातिः ।

पृष्टं पदविभागेन समुदायेन यद्भवेत् ।
विदुर्व्यस्तसमस्तं तदुभयार्थप्रदर्शकम् ॥ २९ ॥

व्यस्तं च तत्समस्तं च व्यस्तसमस्तं पृष्टम् ॥

का प्रियेण रहिता वराङ्गना धाम्नि केन तनयेन नन्दिता ।
कीदृशेन पुरुषेण पक्षिणां बन्धनं समभिलष्यते सदा ॥ ३० ॥

शकुन्तलाभरतेन ॥ शकुन्तलानाम्नी ऋषेः पुत्री, भरतनाम्ना पुत्रेण नन्दिता इत्यर्थः । शकुन्तानां पक्षिणां लाभो द्रव्योपार्जनं तत्र रत आसक्तस्तेन शकुन्तलाभरतेन व्याधेनेत्यर्थः ॥

कीदृशं हृदयहारि कूजितं कः सखा यशसि भूपतेर्मतः ।
कस्तवास्ति विपिने भयाकुलः कीदृशश्च न भवेन्निशाकरः ॥३१॥

कलंकविरहितः ॥ कलं मधुरः शब्दः । कविः राज्ञां काव्यादिग्रन्थरचनाकृत् । अहितः शत्रुः । कलङ्केन मृगरूपाभिज्ञानेन विरहितः न स्यादिति भावार्थः ॥

इति व्यस्तसमस्तजातिः ।

द्विर्व्यस्तमेव यत्पृष्टं समुदायेन यद्भवेत् ।
त्रिधा भिन्नं तदेवोक्तं द्विर्व्यस्तकसमस्तकम् ॥ ३२ ॥

द्विवारं व्यस्तीकृत्य पश्चात्समुदायेन पृच्छयते तद्द्विर्व्यस्तकसमस्तकं पृष्टम् ॥

कौ शंकरस्य वलयावपयोधरः कः
कीदृक्परस्य नियतं वशमेति भूपः ।
संबोधयोरगपतिं विजयी च कीदृ-
ग्दुर्योधनो नहि भवेद्वद कीदृशश्च ॥ ३३ ॥

अहीनाक्षतनयाः ॥ अहिः सर्पः । ना पुमान् । क्षतनयः क्षतः खण्डितो नयो न्यायो येन सः अन्यायवान् । हे अहीन अहीनां सर्पाणामिनः स्वामी तत्संबोधनम् । अक्षतनयः न क्षतो नयो न्यायो येन सः अखण्डन्यायवान् ॥ हीने अक्षिणी यस्यासौ हीनाक्षोऽन्धस्तस्य तनयः पुत्रः न हीनाक्षतनयोऽहीनाक्षतनयः । धृतराष्ट्रो हि हीनाक्षोऽन्ध इति पौराणिकाः । तत्पुत्रो दुर्योधनोऽहीनाक्षतनयो न भवति किं तु अन्धपुत्र इत्यर्थः ॥

को मोहाय दुरीश्वरस्य विदितः संबोधनीयो गुरुः
को धाऽयां विरलः कलो नवघनः किंवन्न कीदृग्द्विजः ।
किं लेखावचनं भवेदतिशयं दुःखाय कीदृक्खलः
को विघ्नाधिपतिर्मनोभवसमो मूर्तः पुमान्कीदृशः ॥३४॥

**राजीवसन्निभवदनः** ॥ राः द्रव्यम् । हे जीव हे गुरो । सन् सज्जनः । इभवत् हस्तिवत् । न विद्यते अः कृष्णोऽस्मिन्निति अनः । ब्राह्मणो हि कृष्णरहितः कदाचिन्न स्यादित्यर्थः । राजी पङ्क्तिः । वसन् निवासं कुर्वन् । इभवदनः इभवत् हस्तितुल्यं वदनं मुखं यस्यासौ गणेश इत्यर्थः । राजीवेन कमलेन सन्निभं सदृशं वदनं मुखं यस्यासौ राजीवसन्निभवदनः ॥

इति द्विर्व्यस्तकसमस्तजातिः ।

द्विःसमस्तं यदा पृष्टं व्यस्तकेन पुनर्भवेत् ।
तद्द्विःसमस्तकव्यस्तं कथितं प्रश्नपण्डितैः ॥ ३५ ॥

द्विवारं समुदायेन पृष्ट्वा पुनर्व्यस्तकेन पृच्छयते तत् द्विःसमस्तव्यस्तं पृष्टम् ॥

कीदृक्षः सकलजनो भवेत्सुराज्ञः
कः कालो विदित इहाधिकारहेतुः ।
कः प्रेयान्कुमुदवनस्य को निहन्ति
भ्रातृव्यं वद शिरसा जितस्त्वया कः ॥ ३६ ॥

**विधुरविरहितः** ॥ विधुरेण कष्टेन विरहितः । सुखीत्यर्थः ॥ विधुश्च रविश्च विधुरवी चन्द्रादित्यौ ताभ्यां रहितः ॥ विधुश्चन्द्रः । अविः ऊर्णायुः । अहितः शत्रुः ॥

संग्रामे स्फुरदसिना त्वया[1] जिताः के
के दुःखं बत निरये नरस्य कुर्युः ।
कस्मिन्नुद्भवति कदापि नैव लोम
ज्ञाताः के जगति महालघुत्वभाजः ॥ ३७ ॥

**नरकरेणवः** ॥ नराश्च करेणवश्च मनुष्यहस्तिनः, नरकस्य रेणवो धूल्यः । अग्निरूपा वालुका इत्यर्थः । नरकरे पुरुषाणां हस्ततले । अणवः परमाणवः ॥

इति द्विःसमस्तकव्यस्तजातिः ।

एकश्रुत्या वचो यत्र भिन्नार्थप्रतिपादकम् ।
प्रभेदं द्विःसमस्तं स्यात्तमेकालापकं विदुः ॥ ३८ ॥

द्विःसमस्तस्य प्रभेदं एकालापकं पृष्टम् ॥

कीदृशी निरयभूरनेकधा सेव्यते परमपापकर्मभिः ।
प्रेतराक्षसपिशाचसेविता कीदृशी च पितृकाननस्थली ॥ ३९ ॥

**नरकपालरचिता** ॥ नरकाणां पालाः मारकजीवरक्षकाः यमास्तै रचिता

१ 'हतास्त्वया के' इति पाठः.

उपस्कृता । नराणां कपालानि कर्पराणि तैः कृत्वा रचिता । श्मशानभूमिस्तु मनुष्याणां मुण्डैः सहिता भवति ॥

केसरद्रुमतलेषु संस्थितः कीदृशो भवति मत्तकुञ्जरः ।
तत्त्वतः शिवमपेक्ष्य लक्षणैरर्जुनः समिति कीदृशो भवेत् ॥४०॥

दानबकुलभ्रमरहितः ॥ दानेन मदेन बकुलानां वृक्षाणां भ्रमरेभ्यः सकाशात् हितः हितकृदित्यर्थः ॥ दानवानां दैत्यानां कुले यो भ्रमो दानवा अमी युध्यन्तीति मिथ्याज्ञानं तेन रहितः ॥

इत्येकालापकजातिः ।

शब्दार्थलिङ्गवचनैर्व्यस्तैर्यद्वा समस्तकैः ।
विभक्त्या च प्रभिन्नं यत्तत्प्रभिन्नकमुच्यते ॥ ४१ ॥

शब्दार्थौ लिङ्गेन वचनेन विभक्त्या च भेदं प्राप्तौ यस्मिन् तत्प्रभिन्नकं पृष्टम् ॥

निर्जितसकलारातेः पृच्छति को न हि को मृत्योर्भयमृच्छति ।
मेघात्ययकृतसुचिराशायाः किं तिमिरक्षयकारि निशायाः ॥ ४२ ॥

विधुतारातेजः ॥ हे विधुताराते, विधुताः कम्पिताः अरातयः शत्रवो येन सः तत्संबोधनम् ॥ अजः ब्रह्मा कृष्णः शंभुरपि च ॥ विधुश्चन्द्रः तारा नक्षत्राणि तासां तेजः प्रकाशः ॥

विहगपतिः कं हृतवानहितं कीदृग्भवति पुरं जनमहितम् ।
किं कठिनं विदितं वद धीमन् यादःपतिरपि कीदृग्भयकृत् ॥४३॥

अहिमकरमयः ॥ अहिं सर्पं ॥ अकरं नास्ति करो राजदण्डो यस्मिन् तत् ॥ अयो लोहम् ॥ अहिमकरमयः अहयः सर्पाः मकराः मत्स्यविशेषास्तन्मयः ॥

इति शब्दार्थलिङ्गप्रभिन्नकम् ।

अनुकूलविधायिदैवतो विजयी स्यान्नु कीदृशो नृपः ।
विरहिण्यपि जानकी वने निवसन्ती मुदमादधौ कुतः ॥ ४४ ॥

कुशलवर्द्धितः ॥ कुशलैः शुभसूचकशकुनैः वर्द्धितो वर्द्धापितः ॥ कुशश्च लवश्च कुशलवनामानौ पुत्रौ तयोर्ऋद्धिः संपत्तस्मात् ॥

कुसुमं पतदेत्य नाकतो वद कस्मै स्पृहयन्ति भोगिनः ।
अधिगम्य रतं वराङ्गना क नु यत्नं कुरुते सुशिक्षिता ॥ ४५ ॥

सुरतरवे ॥ कल्पवृक्षाय वाञ्छन्ति ॥ सुरतस्य संभोगस्य रवः शब्दस्तस्मिन् ॥

इति शब्दार्थविभक्तिभिन्नम् ।

कामुज्जहार हरिरम्बुधिमध्यमग्नां
कीदृक्श्रुतं भवति निर्मलमानसानाम् ।
आमन्त्रयस्व वनमग्निशिखावलीढं
तत्रापि को दहति के मदयन्ति भृङ्गान् ॥ ४६ ॥

कुंदमकरंदारविंदवः ॥ कुं पृथ्वीं । दमकरं शमदमउपशमक्षमायुक्तं भवतीत्यर्थः ।

हे दविन् दवो विद्यते यस्मिन् तत् दवि तत्संबोधनम् । दवो वनाग्निस्तेन युक्तमित्यर्थः । दावो वनाग्निः ॥ कुन्दमकरन्दबिन्दवः कुन्दानां पुष्पविशेषाणां मकरन्दः पुष्परसो गन्धस्तस्य बिन्दवः कणाः ॥

वसति कुत्र सरोरुहसंततिर्दिनकृतो ननु के तिमिरच्छिदः ।
पवनभक्षसपत्नरणोत्सुकं पुरुषमाह्वय को जगति प्रियः ॥४७॥

केकिरणोत्कराः ॥ के पानीये । किरणानां उत्कराः समूहाः । हे केकिरणोत्क, 'केका वाणी मयूरस्य' इत्यमरः । केका विद्यते येषां ते केकिनः केकिनां मयूराणां रणे शब्दे उत्क उत्सुकः तत्संबोधनम् । राः द्रव्यम् ॥

इति शब्दार्थवचनभिन्नम् ।

कीदृग्गृहं याम्यगृहं गतस्य कात्राणमम्भस्तरणे जनानाम् ।
भूषा कथं कण्ठगते नु पृष्टे मुक्ताकलापैरिति चोत्तरं किम् ॥४८॥

हाराविनावः ॥ हारावि हा इति खेदे । हा इति रावः शब्दो विद्यते यस्मिन् तत् । नावः नौकाः । हे हाराः, वः युष्मान् विना ॥

कवयो वद कुत्र कीदृशाः कठिनं किं विदितः समन्ततः ।
अधुना तव वैरियोषितां हृदि तापः प्रबलो विहाय काः ॥४९॥

गिरिसारमुखाः ॥ गिरि वाण्याम् सारं प्रधानम् स्फुटोच्चारवन्मुखं वदनं येषां ते । गिरिसारं लोहम् । उखाः स्थालीः अन्नरन्धनहण्डिकाः ॥

इति शब्दार्थलिङ्गविभक्तिवचनभिन्नम् ।

मेघात्यये भवति किं सुभगावगाहं
का वा विडम्बयति वारणमल्लवेश्याः ।
दुर्वारवीर्यविभवस्य भवेद्रणे कः
काः स्मेरवक्त्रसुभगास्तरणिप्रभाभिः ॥ ५० ॥

सरोजराजयः ॥ सरस्तडागम् । जरा वयोहानिः । जयः प्रसिद्धः ॥ सरोजराजयः सरोजानां कमलानां राजयः श्रेण्यः ॥

पृच्छति शिरसिरुहो मधुमथनं
मधुमथनस्तं शिरसिरुहं च ।
कः खलु चपलतया भुवि विदितः
का ननु यानतया गवि गदिताः ॥ ५१ ॥

केशवनौकाः ॥ हे केशव हे हरे । हे केश हे वाल । वनौकाः वने ओको गृहं यस्यासौ वनौकाः वानरः । नौकाः नावः ॥

इति शब्दार्थलिङ्गवचनभिन्नम् ।

न भवति मलयस्य कीदृशी भूः क इह कुचं न बिभर्ति कं गता श्रीः ।
भवदरिनिवहेषु कालि नित्यं बलमथनेन विपन्नगाधायि केषाम् ॥५२॥

विपन्नगानाम् ॥ विपन्नगा विगताः पन्नगाः सर्पा यस्याः सा ईदृशी न, किंतु

२ विद०

पन्नगसहितैव । ना पुमान् । अम् कृष्णम् । विपत् संपदोऽभावः अलक्ष्मीः दरिद्रता । नगानां पर्वतानाम् ॥

समयमिह वदन्ति कं निशीथं शमयति कान्वद वारिवाहवृन्दम् ।
वितरति जगतां मनःसु कीदृङ्मुदमतिमात्रमयं महातडागः ॥ ५३ ॥

**अरविंदवान्** ॥ अरविं नास्ति रविः सूर्यो यस्मिन् सः अरविस्तम् । दवान् दावानलान् । अरविन्दवान् । अरविन्दानि कमलानि विद्यन्ते यस्मिन् सोऽरविन्दवान् । मत्त्वन्तः ॥

इति शब्दार्थविभक्तिवचनभिन्नम् ।

कीदृक्षं समिति बलं निहन्ति शत्रुं
विष्णोः का मनसि मुदं सदा तनोति ।
तुच्छं सच्छरधिमुखं निगद्यते किं
पश्वत्वैः सममपमान एव केषु ॥ ५४ ॥

**अभिमानिषु** ॥ अभि नास्ति भीर्भयं यस्य तत् । मा लक्ष्मीः । अनिषु न विद्यन्ते इषवो बाणाः यस्मिन् तत् । अभिमानिषु गर्ववत्सु ॥

घनसमये शिखिषु स्यान्नृत्यं कीदृक्षु किं घनात्पतति ।
प्रावृषि कस्य न गमनं मानसगमनाय कीदृशा हंसाः ॥५५॥

**समुत्सुकमनसः** ॥ समुत्सु मुदा हर्षेण सहवर्तमानाः समुदस्तेषु । कं पानीयं । अनसः शकटस्य । समुत्सुकमनसः सं सम्यक् उत् प्राबल्येन सु अतिशयेन यत् उत्पन्नं तत्समुत्सुकम् 'इष्टार्थोद्युक्त उत्सुकः' इत्यमरः । समुत्सुकं उत्कण्ठामुक्तं मनो येषां ते ॥

इति शब्दार्थलिङ्गवचनभिन्नम् ।

इति प्रभिन्नकजातिः ।

**अर्थमात्रैकभेदेन भिन्नं बध्नन्ति केचन ।**
**सुकुमारा धियस्तच्च विदग्धैर्नादृतं यथा ॥ ५६ ॥**

आनन्दयति कोऽत्यर्थं सज्जनानेव भूतले ।
प्रबोधयति पद्मानि तमांसि च निहन्ति कः ॥ ५७ ॥

**मित्रोदयः** ॥ मित्राणां सखीनां उदयो वृद्धिः । मित्रस्य सूर्यस्य उदय उद्गमनम् ॥

अटवी कीदृशी प्रायो दुर्गमा भवति प्रिये ।
प्रियस्य कीदृशी कान्ता तनोति सुरतोत्सवम् ॥ ५८ ॥

**मदनवति** ॥ मदना मदनवृक्षाः विद्यन्ते यस्यां सा । अतिगहनत्वाद्दुर्गमा । मदनः कामो विद्यते यस्याः सा । सयौवना इत्यर्थः ॥

इति प्रकारान्तरेण प्रभिन्नकजातिः ।

**भिन्नाववश्यं कर्तव्यौ शब्दार्थौ प्रश्नपण्डितैः ।**
**लिङ्गाङ्गिषु यथाशक्ति भेदमाहुर्मनीषिणः ॥५९॥**

इति प्रथमः परिच्छेदः ।

---

## द्वितीयः परिच्छेदः ।

विशेषणं विशेष्येण यत्र प्रश्ने विधीयते ।
भेद्यभेदकमाहुस्तं प्रश्नं प्रश्नविदो यथा ॥ १ ॥

यस्मिन्पृष्टे विशेष्येण युक्तं विशेषणं क्रियते तत् भेद्यभेदकं भेद्यं च भेदकं च भेद्यभेदके भेद्यभेदके यस्मिन् तत् भेद्यभेदकं पृष्टम् ॥

कीदृक्किं स्यान्न मत्स्यानां हितं स्वेच्छाविहारिणाम् ।
गुणैः परेषामत्यर्थं मोदते कीदृशः पुमान् ॥ २ ॥

विमत्सरः ॥ वयः पक्षिणो विद्यन्ते यस्मिन् तत् विमत् ईदृशं सरस्तडागः । विगतो मत्सरः अहंकारो यस्य सः ॥

अगस्त्येन पयोराशेः कियत्किं पीतमुज्झितम् ।
त्वया वैरिकुलं वीर समरे कीदृशं कृतम् ॥ ३ ॥

सकलंकं ॥ सकलं समस्तं कं पानीयं पीतम् । मूत्रं च सकलङ्कं कलङ्केनाननलाञ्छनेन सहवर्तमानं कृतम् ॥

इति भेद्यभेदकजातिः ।

दीर्घवृत्तेन यत्पृष्टमुत्तरं कियदक्षरम् ।
तदोजस्वीति विख्यातमूर्जितं चेति केचन ॥ ४ ॥

यत्पृष्टं दीर्घश्लोकेन पृच्छयते तस्योत्तरं स्तोकैरक्षरैर्भवेत् तत् ओजस्वि पृष्टम् ॥

कामिन्याः स्तनभारमन्थरगतेर्लीलाचलच्चक्षुषः
कंदर्पैकविलासनित्यवसतेः कीदृक्पुमान्वल्लभः ।
हेलाकृष्टकृपाणपाटितगजानीकात्कुतस्तेऽरयः
श्वासायासविशुष्ककण्ठकुहरा निर्यान्ति जीवार्थिनः ॥ ५ ॥

समरतः ॥ समं तुल्यं रतं भोगक्रिया यस्य सः । समरतः संग्रामात् ॥

दैत्यारातिरसौ वराहवपुषा कामुज्जहाराम्बुधेः
का रूपं विनिहन्ति को मधुवधूवैधव्यदीक्षागुरुः ।
स्वच्छन्दं नवशल्लकीकवलनैः पम्पासरोमज्जनैः
के विन्ध्याद्रिवने वसन्त्यभिमतक्रीडाभिरामस्थिताः ॥ ६ ॥

कुंजराः ॥ कुं पृथ्वीम् । जरा वृद्धत्वम् । अः कृष्णः । कुञ्जराः हस्तिनः ॥

इत्योजस्विजातिः ।

उपमादिरलंकारो बहुधा परिकीर्तितः ।
यत्नेन कथ्यते सार्धं सालंकारं तदुच्यते ॥ ७ ॥

अलंकारैः सहवर्तमानं सालंकारं पृष्टम् ॥

कल्याणवाक्त्वमिव किं पदमत्र कान्तं
सद्भूपतेः स्वमिव कः परितोषकारी ।

कः सर्वदा वृषगतिः स्वमिवातिमात्रं
भृत्याश्रितः कथय पालितसर्वभूतः ॥ ८ ॥

शंकरः ॥ शं सुखम् । करो राजभागः । शंकरो महादेवः ॥

सूर्यस्य का तिमिरकुञ्जरवृन्दसिंही
सत्यस्य का सुकृतवारिधिचन्द्रलेखा ।
पार्थश्च कीदृगरिदावहुताशनोऽभू-
त्का मालतीकुसुमदाम हरस्य मूर्ध्नि ॥ ९ ॥

भागीरथी ॥ भा कान्तिः । गीः वाणी । रथी रथो विद्यते यस्य सः । भगीरथेन आनीता भागीरथी गङ्गा ॥

रूपकं सालंकारजातिः ।

लघुवृत्तेन यत्पृष्टं प्रभूताक्षरमुत्तरम् ।
सकौतुकमितीच्छन्ति तद्विदस्तदिदं यथा ॥ १० ॥

लघुश्लोकेन यत्पृष्टं पृच्छयते तस्योत्तरं बह्वक्षरैर्भवेत् तत्सकौतुकं पृष्टम् ॥

के स्थिराः के प्रियाः स्त्रीणां कोऽप्रियो नक्तमाह्वय ।
नृत्यभूः कीदृशी रम्या नदी कीदृग्घनागमे ॥ ११ ॥

अगाधवारिपूरजनिततरंगा ॥ अगाः पर्वताः । धवाः भर्तारः । रिपुः शत्रुः । हे रजनि । ततरंगा ततो विस्तीर्णो रङ्गो नर्तनमण्डपो यस्याः सा । अगाधेन अतलस्पर्शेन वारिपूरेण जलसमूहेन जनिता उत्पादितास्तरंगा लहर्यो यस्यां सा ॥

का कृता विष्णुना कीदृग्योषितां कः प्रशस्यते ।
असेव्यः कीदृशः स्वामी को निहन्ता निशातमः ॥ १२ ॥

कुमुदवनबान्धवोदयः ॥ कोः पृथिव्याः मुत् कुमुत् । पृथिव्याः मध्ये प्रीतिः कृतेत्यर्थः । अवनं रक्षणं विद्यते यस्यासौ अवनवान् रक्षाकरः। धवो भर्ता । सविशेषणमुत्तरं अत्र कृतम् । नास्ति दया यस्य सः अदयः दयारहितः । अथवा 'दय दाने' । नास्ति दयो दानं यस्य सः अदयः अदाता ॥ कुमुदानां चन्द्रविकासिकमलानां वनानां बान्धवो भ्राता चन्द्रस्तस्योदयः प्रकटभावः ॥

इति सकौतुकजातिः ।

प्रश्नवर्णविधेस्तुल्यं यत्र स्यादुत्तरं वरम् ।
प्रश्नोत्तरसमं तज्ज्ञास्तदाहुः श्रूयतां यथा ॥ १३ ॥

प्रश्नश्च उत्तरं च प्रश्नोत्तरे ताभ्यां समं युगपद्भवनमेकीभूतं प्रश्नोत्तरसमं पृष्टम् ॥

कंदर्पं मदजनकं प्राहुः काचघटी गदिताच्छकमेह ।
इत्यादि प्रश्ने युक्तं यद्युत तद्ब्रूह्युत्तरमाशु विचिन्त्य ॥ १४ ॥

कंदर्पं कामं । काचघटी काचः प्रसिद्धः अतिनिर्मलस्तस्य घटी कूपिका ॥

पथिकस्तिष्ठति कष्टे विरही नाविक आस्ते तत्कृतरक्षः।
इत्यादि प्रश्ने युक्तं यद्ब्रूहि तदुत्तरमुत्तमपूरुष ॥ १५ ॥

पथि मार्गे चलति सः पथिकः। नाविकः पोतवाहः ॥

इति प्रश्नोत्तरसमजातिः।

यस्मिन्नुत्तरमुच्चार्य प्रश्नस्तस्यैव पृच्छ्यते।
पृष्टप्रश्नं तदिच्छन्ति प्रश्नोत्तरविदो यथा ॥ १६ ॥

यस्मिन् प्रश्नविषये प्रथममुत्तरस्योच्चारं कृत्वा तस्यैवोत्तरस्य पुनः प्रश्नः पृच्छयते तत् पृष्टप्रश्नं नाम पृष्टम् ॥

लक्ष्मणेत्युत्तरं यत्र प्रश्नः स्यात्तत्र कीदृशः।
ग्रीष्मं द्विरदवृन्दाय वनाली कीदृशी हिता ॥ १७ ॥

कासारसहिता ॥ अत्र का सारसहिता इति प्रश्नः प्रथमवारमेव। द्वितीयवारं तूत्तरम्। सारसस्य पक्षिणो हिता प्रिया का इति प्रश्नः। 'हंसस्य योषिद्वरटा सारसस्य तु लक्ष्मणा' इत्यमरः। कासारेण आखातसरोवरेण सहिता सहवर्तमाना ॥

चादय इति यत्र स्यादुत्तरमथ तत्र कीदृशः प्रश्नः।
कथय त्वरितं के स्युर्नौकाया वाहनोपायाः ॥ १८ ॥

केनिपाताः ॥ अत्रापि के निपाता इति प्रश्नः प्रथमवारमेव। द्वितीयवारं तूत्तरम्। निपाताः के भवन्तीति प्रश्नः। चादयो निपातसंज्ञाः। के पानीये निपतन्ति ते केनिपाताः। अलुक्समासः 'हालेसा' इति भाषा ॥

इति पृष्टप्रश्नजातिः।

कथयामुकमित्यादि भङ्क्त्वा यत्रोत्तरं भवेत्।
भग्नोत्तरं तदिच्छन्ति काकुमात्रेण गोपितम् ॥ १९॥

अनिर्दिष्टं पृष्टं भङ्क्त्वा यत्रोत्तरं भवेत् तत् भग्नोत्तरं भग्नं उत्तरं यस्मिन् तत् भग्नोत्तरं पृष्टम् ॥

भवत इवातिस्वच्छं कस्याभ्यन्तरमगाधमतिशिशिरम्।
काव्यामृतरसमग्नस्त्वमिव सदा कः कथय सरसः ॥ २० ॥

शब्दविकारमात्रेण गोपितं उत्तरमन्तपदे सरसस्तडागस्य रसेन शृङ्गारादिना सहवर्तमानः सरसः पुमान् ॥

वीरे सरुषि रिपूणां नियतं का हृदयशायिनी भवति।
नभसि प्रस्थितजलदे का राजति हन्त वद तारा ॥ २१ ॥

अत्राप्युत्तरमन्तपदे। आरा चर्मप्रभेदिनी। शत्रूणां मनसि दुःखरूपा आरा तारा। 'नक्षत्रमृक्षं भं तारा' इत्यमरः ॥

इति भग्नोत्तरजातिः।

यत्पृष्टं प्रश्नवाक्ये स्यादादिमध्यान्तसंस्थितम्।

**उत्तरं त्रिधा प्रोक्तमादिमध्यान्तसंज्ञितम् ॥ २२ ॥**

प्रश्नानां पदसमुदाये आदौ यदुत्तरं भवेत् तत् आद्युत्तरं पृष्टम् ॥

**भ्रमरहितः कीदृक्षो भवतितरां विकसितः पद्मः ।**
**ज्योतिषिकः कीदृक्षः प्रायो भुवि पूज्यते लोकैः ॥ २३ ॥**

भ्रमरहितः भ्रमराणां भृङ्गाणां हितो हितकृत् । भ्रमेण मिथ्यामत्या रहितः शुद्धज्ञानवान् ॥

**प्रभवः को गङ्गाया नगपतिरतिसुभगशृङ्गधरः ।**
**के सेव्यन्ते सेवकसार्थैरत्यर्थमर्थरतैः ॥ २४ ॥**

प्रभवः उत्पत्तिस्थानम् । प्रभवो महान्त ईश्वराः । आद्युत्तरजातिरिति प्रश्नानां पदसमुदायमध्ये यदुत्तरं भवेत् तत् मध्योत्तरं पृष्टम् ॥

**इत्याद्युत्तरजातिः ।**

**अयमुदितो हिमरश्मिर्वनितावदनस्य कीदृशः सदृशः ।**
**नीलादिकोपलम्भः स्फुरति प्रत्यक्षतः कस्य ॥ २५ ॥**

**सदृशः** समान इव दृश्यतेऽसौ तुल्य इत्यर्थः । दृशा नेत्रेण सहवर्तमानः सदृक्-तस्य सदृशः सनेत्रस्य मनुष्यस्य ॥

**गैरिकमनःशिलादिः प्रायेणोत्पद्यते कुतो नगतः ।**
**यः खलु न चलति पुरुषः स्थानादुक्तः स कीदृक्षः ॥ २६ ॥**

**नगतः** नगात्पर्वतात् न गतः स न जगामेत्यर्थः ॥ प्रश्नानां पदसमुदायी अन्ते यदुत्तरं भवेतत् अन्तोत्तरं पृष्टम् ॥

**इति मध्योत्तरजातिः ।**

**कस्मिन्वसन्ति वद मीनगणा विकल्पं**
**किंवापदं वदति किं कुरुते विवस्वान् ।**
**विद्युल्लतावलयवान्पथिकाङ्गनाना-**
**मुद्वेजको भवति कः खलु वारिवाहः ॥ २७ ॥**

**वारिवाहः** । वारि जले । वा विकल्पार्थे । अहः दिनम् । वारिवाहो मेघः ॥

**शब्दः प्रभूगत इति प्रचुराभिधायी**
**कीदृग्भवेद्वदत शब्दविदो विचिन्त्य ।**
**कीदृग्बृहस्पतिमते विदिताभियोगः**
**प्रायः पुमान्भवति नास्तिकवर्गमध्यः ॥ २८ ॥**

**नास्तिकवर्गमध्यः** न अस्ति न विद्यते कवर्गो गकारो मध्ये यस्य सः कवर्ग-मध्यप्रभूगतोऽयं शब्दः । कोऽर्थः । यदा प्रभूगतस्य मध्यात्कवर्गीयो गकारो लुप्यते तदा प्रभूत इत्येवावशिष्यते । प्रभूतः प्रचुरवाची । नास्तिकानां अपुनर्जन्मवादिनां वर्गः समूहस्तस्य मध्येऽन्तर्वर्ती । नास्ति परलोके मतिर्येषां ते नास्तिका इति व्युत्पत्त्या तेषां मतं भिन्नमेवास्ति ॥

**इत्यन्तोत्तरजातिः ।**

पदान्तरादिसंबन्धात्प्रश्नवाक्येऽपि संस्थितम् ।
कथितापह्नुतिः सा स्याल्लक्ष्यते यत्र नोत्तरम् ॥ २९ ॥

यत्पृष्टं प्रश्नवाक्ये संस्थितमपि पदान्तरेषु गोपनात् उत्तरं न ज्ञायते तत्कथितापह्नुति पृष्टम् ॥

पृथ्वीसंबोधनं कीदृक्कविना परिकीर्तितम् ।
केनेदं मोहितं विश्वं प्रायः केनाप्यते यशः ॥ ३० ॥

कथितस्य भाषितस्यापि अपह्नुतिः निह्नवनं यस्मिन् तत् । कविना इति उत्तरम् । को हे पृथ्वि । इना कामेन । कविना काव्यकर्त्रा ॥

कस्य मरौ दुरधिगमः कमले कः कथय विरचितावासः ।
कैस्तुष्यति चामुण्डा रिपवस्ते वद कुतो भ्रष्टाः ॥ ३१ ॥

कस्य इत्युत्तरम् । कं जलं तस्य । को ब्रह्मा इत्युत्तरम् । कैर्मस्तकैरित्युत्तरम् । कुतः पृथिव्याः सकाशादित्युत्तरम् । पृथ्व्याधिकारात्पतिता इत्यर्थः ॥

इति कथितापह्नुतिजातिः ।

यत्र भङ्गस्य वैषम्यं विषमं तन्निगद्यते ।

यत्र प्रश्ने भङ्गस्य रचनायाः दुष्करत्वं भवति तत् विषमं पृष्टम् ॥

कीदृग्वनं स्यान्न भयाय पृष्टे यदुत्तरं तस्य च कीदृशस्य ।
वाच्यं भवेदीक्षणजातमम्बु कं चाधिशेते गवि कोऽर्चनीयः ॥३२॥

**अहिंस्रमहिमः** ॥ अहिंस्रं न सन्ति हिंस्राः घातुका जीवविशेषाः यस्मिन् तत् । अहिमः न विद्यते हिम् अहिम् तस्य अहिमः सतः । कोऽर्थः । यदा अहिंस्रशब्दात् हिम् दूरीक्रियते तदा अस्रं इति तिष्ठति । अस्रं नेत्रजलं अश्रुपातः । अहिं शेषनागम् । अः कृष्णः पूज्यः सन् अधिशेते ॥

प्रायः कार्ये न मुह्यन्ति नराः सर्वत्र कीदृशाः ।
नाधा इति भवेच्छब्दो नौवाची वद कीदृशः ॥ ३३ ॥

**सावधानाः** ॥ सह अवधानेन समाधिना वर्तन्त इति सावधानाः । 'समाधिर्नियमे ध्याने' इत्यमरः । अव्यग्रचित्ता इत्यर्थः । सौ अधा ना सू इति पदच्छेदः । अस्यार्थः–औकारेण सहवर्तमानः सौ नधा अधा धारहितः एवंविधः ना इति शब्दः । सकारस्य विसर्गः । नोः इति नौवाचि भवेदिति योजना । अस्यायं विधिः-नाधा इत्यत्र ना धा इति भिन्नौ लिख्येते ना इति सौ औकारेण सहितः क्रियते तदा नौ इति स्यात् । अधा धा इति दूरीक्रियन्ते स् इत्यस्य विसर्गः क्रियते । नौः इत्येवं सिध्यति नौकावाची जातः ॥

इति विषमजातिः ।

वृत्तनामोत्तरं पृष्टं भवेत्तद्वृत्तनामकम् ॥ ३४ ॥

वृत्तानां छन्दसां नाम यस्मिन् उत्तरे तत् वृत्तनामकं पृष्टम् ॥

गतक्लेशायासा विमलमनसः कुत्र मुनय-
स्तपस्यन्ति स्वच्छाः सुररिपुरिपोः का च दयिता ।
कविप्रेयः किं स्यान्नवलघुयुतैरष्टगुरुभि-
र्बुधा वृत्तं वर्णैः स्फुटघटितबन्धं कथयत ॥ ३५ ॥

**शिखरिणी** ॥ शिखराणि विद्यन्ते यस्मिन्नसौ शिखरी तस्मिन् । शिखरिणि पर्वते । ई लक्ष्मीः । शिखरिणीछन्दः ॥

उरसि मुरभिदः का गाढमालिङ्गितास्ते
सरसिजमकरन्दामोदिता नन्दने का ।
गिरिसमलघुवर्णैरर्णवाख्यातिसंख्यै-
र्गुरुभिरपि कृता का छन्दसां वृत्तिरम्या ॥ ३६ ॥

**मालिनी** ॥ मा लक्ष्मीः । अलिनी भ्रमरी । मालिनी नाम छन्दोवृत्तम् ॥

इति वृत्तनामजातिः ।

एकमेवोत्तरं यत्र सुश्लिष्टत्वाद्द्विधा भवेत् ।
सुप्तिङन्तप्रभेदेन नामाख्यातं तदुच्यते ॥ ३७ ॥

सुबन्ततिङन्तयोर्भेदेन सुगुप्तत्वाद्द्विधा भवेत् यत्र प्रश्ने एकमेवोत्तरं तत् नामाख्यातं पृष्टम् । नाम च आख्यातं च नामाख्याते ते विद्येते यस्मिन् तत् ॥

समरशिरसि सैन्यं कीदृशं दुर्निवारं
विगतघननिशीथे कीदृशे व्योम्नि शोभा ।
कमपि विधिवशेन प्राप्य योग्याभिमानं
जगदखिलमनिन्द्यं दुर्जनः किं करोति ॥ ३८ ॥

**अभिभवति** ॥ अभि नास्ति भीर्यस्य तत् भयरहितं भवति । भानि नक्षत्राणि विद्यन्ते यस्मिन् तत् भवत् तस्मिन् भवति नक्षत्रयुक्ते । अभिभवति पराभवति । नीचो वृद्धिं गतो दुःखदायक एव भवेदिति नीतिः । प्रथमपुरुषैकवचनम् ॥

पदमनन्तरवाचि किमिष्यते
कपिपतिर्विजयी ननु कीदृशः ।
परगुणं गदितुं गतमत्सराः
कुरुत किं सततं भुवि सज्जनाः ॥ ३९ ॥

**अनुसरामः** ॥ अनु पश्चाद्वाची । रामेण सहवर्तमानः सरामः । अनुसरामः वयं परमगुणं प्रति अनुसरणं कुर्मः । उत्तमपुरुषबहुवचनम् । लट् ॥

वदति रामममुष्य जघन्यजो वसति कुत्र सदालसमानसः ।
अपि च शक्रसुतेन तिरस्कृतो रविसुतः किमसौ विदधे त्वया ॥४०॥

अनुजगृहे ॥ हे अनुज भ्रातः । गृहे वसति । राम आह—मया अनुजगृहे अनुगृहीतः ॥

भवति गमनयोग्या कीदृशी भू रथानां
किमतिमधुरमम्लं भोजनान्ते प्रदेयम् ।
प्रियतम वद नीचामन्त्रणे किं पदं स्या-
त्कुमतिकृतविवादाश्चक्रिरे किं समर्थैः ॥ ४१ ॥

समादधिरे ॥ समा अविषमा । दधि क्षीरजम् । रे इति नीचसंबोधने दीयते । रे दास । समादधिरे समानत्वेन स्थापिताः । विवादस्य वा समाधानं कृतम् ॥ लिट् ॥

वदतानुत्तमवचनं ध्वनिरुच्चैरुच्यते स कीदृक्षः ।
तव सुहृदो गुणनिवहे रिपुनिवहं किं नु कर्तारः ॥ ४२ ॥

अवमंतारः ॥ अवमं नीचार्थवाचकम् । तारः अत्युच्चैर्ध्वनिः । अवमन्तारः । अस्मिन्मित्राणि रिपूणामपमानं करिष्यन्तीत्यर्थः । तारस् इत्यस्य रूपम् ॥

कीदृक्तोयं दुस्तरं स्यात्तितीर्षोः
का पूज्यास्मिन्खड्गमामन्त्रयस्व ।
दृष्ट्वा धूमं दूरतो मानविज्ञाः
किं कर्तास्मिन्प्रातरेवाप्रयासम् ॥ ४३ ॥

अनुमातासे ॥ न विद्यते नौः यत्र तत् अनु । नौकारहितमित्यर्थः । माता जनित्री । हे असे हे खड्ग । अनुमातासे त्वमनुमानं करिष्यसि ॥ लुट् ॥

कामुकाः स्युः कया नीचाः सर्वे कस्मिन्प्रमोदते ।
अर्थिनः प्राप्य पुण्याहं करिष्यध्वे वसूनि किम् ॥ ४४ ॥

दास्यामहे ॥ दास्या । दासी चात्र मौल्येन क्रीता वेश्या वा गृह्यते । महे महोत्सवे । 'मह उद्धव उत्सवः' इत्यमरः । वयं दास्यामहे दानं दास्यामः ॥

को दुःखी सर्वकार्येषु किं भृशार्थस्य वाचकम् ।
यो यस्माद्विरतो नित्यं ततः किं स करिष्यति ॥ ४५ ॥

प्रयास्यति ॥ प्रयास आयासोऽस्यास्ति सः प्रयासी । अति अत्यर्थे प्रसिद्धः । प्रयास्यति प्रकर्षेण तत् स्थानं विमुच्य गमिष्यति ॥ लृट् ॥

विद्यन्त इति समानार्थः शब्दः को चिरयति मुद्रां किम् ।
कथमपि यदि ते कोपः स्यात्त्वां सुजन किं करोतु वद ॥ ४६ ॥

संत्यजतु ॥ सन्ति विद्यन्ते । अजतु अलाक्षा । लाक्षाव्यतिरिक्तमन्यत्किंचिदपि मुद्रिकामणिं स्थापयितुं न च शक्नोति । अयं भावार्थः । संत्यजतु सः मां संत्यज्य दूरेण गच्छतु इत्यर्थः ॥

मेघात्यये भवति का सुभगावगाहा
वृत्तं वसन्ततिलका कियदक्षराणाम् ।

भो भो कदर्यपुरुषा विषुवद्दिनं च
वित्तं च वः सुबहु तत्क्रियतां किमेतम् ॥ ४७ ॥

**नदीयतां** ॥ नदी प्रसिद्धा । इयतां एतत्परिमाणमेषां तानि इयन्ति तेषां एतावदक्षराणामेव भवति । अस्माभिर्न दीयताम् ॥ लोट् ॥

का माद्यति मकरन्दैस्तनयं कमसूत जनकराजसुता ।
कथय कृषीवल सस्यं पक्वं किमचीकरस्त्वमपि ॥ ४८ ॥

**अलीलवं** ॥ अली भ्रमरः । लवं लवनामानं पुत्रम् । अहं अलीलवं छेदनमकारयम् ॥

पृच्छति पुरुषः केऽस्यां समभूवन्वज्रकृत्तपक्षतयः ।
बहुभयदेशं जिगमिषुरेकाकी वार्यते स कथम् ॥ ४९ ॥

**मानवनगाः** ॥ हे मानव । नगाः पर्वताः । इन्द्रेण हि पर्वतानां पक्षच्छेदः कृत इति पौराणिका वदन्ति । मानवनगाः हे अनवन न विद्यते अवनं रक्षणं यस्य सः अनवनः तत्संबोधनं हे अरक्षक, त्वं मागाः गमनं मा कुर्याः ॥ लुङ् ॥

किमकरवमहं हरिर्महीध्रं
स्वभुजबलेन गवां हितं विधित्सुः ।
प्रियतमवदनेन पीयते कः
परिणतबिम्बफलोपमः प्रियायाः ॥ ५० ॥

**अधरः** ॥ हे कृष्ण, त्वं गोवर्धनपर्वतं अधरः हस्ते धृतवान् । अधरः ओष्ठः ॥

परिहरति भयात्तवाहितः कं
कमथ कदापि न विन्दतीह भीतः ।
कथय किमकरोरिमां धरित्रीं
नृपतिगुणैर्नृपते वरस्त्वमेकः ॥ ५१ ॥

**समरंजयं** ॥ समरं संग्रामम् । जयं जयवादम् । अहं समरंजयं रागिणीं पृथ्वीमकरवम् ॥ लङ् ॥

कीदृक्सेना भवति रणे दुर्वारा
वीरः कस्मै स्पृहयति लक्ष्मीमिच्छन् ।
का संबुद्धिर्भवति भुवः संग्रामे
किं कुर्वीध्वं सुभटजना भ्रातृव्यान् ॥ ५२ ॥

**पराजयेमहि** ॥ परा उत्कृष्टा । उत्कृष्टा एव सेना जयं प्राप्नुयादित्यर्थः । आजये संग्रामाय । हे महि हे पृथ्वि । वयं पराजयेमहि जयेम ॥

कंसारातेर्वद गमनं केन स्या-
त्कस्मिन्दृष्टिं संलभते स्वल्पेच्छुः ।

कं सर्वेषां शुभकरमूचुर्धीराः
किं कुर्यास्त्वं सुजन सशोकं लोकम् ॥ ५३ ॥

**विनोदयेयं** ॥ विना गरुडेन । उदये सति परस्योन्नतौ सत्यां । अयं भाग्यं । अयमित्यकारान्तशब्दस्य द्वितीयैकवचनम् । अहं तं विनोदयेयं विनोदेन युक्तं कुर्यामित्यर्थः । विधिसंभावनयोः लिङ् ॥

वारणेन्द्रो भवेत्कीदृक्प्रीतये भृङ्गसंहतेः ।
यद्यवक्ष्यं तदास्मै किमकरिष्यमहं धनम् ॥ ५४ ॥

**समदास्यः** ॥ समदं मदसहितं आस्यं मुखं यस्य सः । भ्रमरा हि गजानां मदमाघ्राय हृष्यन्ति । समदास्यः त्वं दानं व्यतिरिष्यः ॥

काले देशे यथायुक्तं नरः कुर्वन्नुपैति कान् ।
भुक्तवन्तावलप्सेतां किमन्नमकरिष्यताम् ॥ ५५ ॥

**अहास्यतां** ॥ हास्यस्य भावो हास्यता न हास्यता अहास्यता ताम् । युक्तक्रियां कुर्वतो न कश्चिद्धसेदित्यर्थः । अहास्यतां 'ओहाक् त्यागे' क्रियातिपत्तौ स्यप् । तदन्नं तावत्त्यक्ष्यतामित्यर्थः ॥ लृङ् ॥

इति नामाख्यातजातिः ।

**ज्ञेयं तार्क्यदृशा तार्क्यं सौत्रं सूत्रोत्तरैस्तथा ।**
**शाब्दीयं शब्दसंज्ञाभिः शास्त्रजं शास्त्रभाषया ॥ ५६ ॥**

तर्कशास्त्रे भवं तार्क्यं पृष्टम् ॥

हिमानीस्थगिरौ स्यातां कीदृशौ शशिभास्करौ ।
कः पूज्यः कः प्रमाणेभ्यो न प्रभाकरसंमतः ॥ ५७ ॥

**अभावः** ॥ अभौ नास्ति भा दीप्तिर्ययोस्तौ कान्तिरहितौ । अः कृष्णः । अभावः प्रमाणशास्त्रे प्रसिद्धः । अभावो नाम सप्तमः पदार्थः । प्राभाकरास्तु अभावरूपं सप्तमं पदार्थं प्रमाणत्वेन न मन्यन्ते ॥

के प्रवीणाः कुतो हीनं जीर्णं वासोऽशुमांश्च कः ।
निराकरिष्णवो बाह्यं योगाचाराश्च कीदृशाः ॥ ५८ ॥

**विज्ञानवादिनः** ॥ विज्ञाः विशेषेण जानन्ति ते चतुराः । नवात् नूतनात् । जीर्णं हि वस्त्रं नवात् हीनमूल्यं स्यादित्यभिप्रायः । इनः सूर्यः । विज्ञानवादिनः विशेषेण ज्ञानस्य तत्त्वार्थज्ञानस्य वादो विद्यते येषु ते विज्ञानवादिन इति पदं तर्कशास्त्रे प्रसिद्धत्वात् तार्क्यजातिरिति । सूत्रे भवं सौत्रं पृष्टम् ॥

इति तार्क्यजातिः ।

को नयति जगदशेषं क्षयमथ बिभरांबभूव कं विष्णुः ।
नीचः कुत्र सगर्वः पाणिनिसूत्रं च कीदृक्षम् ॥ ५९ ॥

**यमोगंधने** ॥ यमः कृतान्तः । अगं परिशेषाद्गोवर्धनम् । धने द्रव्ये । 'यमो गन्धने' पाणिनीयव्याकरणमध्ये इदं सूत्रमस्ति ॥

किं स्याद्विशेष्यनिष्ठं का संख्या वदत पूरणी भवति ।
नीचः केन सगर्वः सूत्रं चन्द्रस्य कीदृक्षम् ॥ ६० ॥

**विशेषणमेकार्थेन** विशेषणम् । एका । शून्यानां संख्यापूरकं एकमेव भवति । एकादिरङ्को लिख्यते तदा बिन्दूनां साफल्यं स्यादन्यथा शून्यमेव । अथवा एकद्वित्र्यादिका संख्या । अथवा ऊनानामेकत्रिपञ्चादीनां पूरण्येका एव संख्या समसंज्ञा कर्त्री भवेदित्याकूतम् । अर्थेन द्रव्येण । 'विशेषणमेकार्थेन' इदं चान्द्रव्याकरणसूत्रमस्तीति ॥

इति सौत्रजातिः ।

शब्दानामिदं शाब्दीयं व्याकरणम् ॥ शाब्दे भवं शाब्दीयं पृष्टम् ॥

न श्लाघते खलः कस्मै सुप्तिङन्तं किमुच्यते ।
लादेशानां नवानां च तिङां किं नाम कथ्यताम् ॥ ६१ ॥

**परस्मैपदम्** ॥ परस्मै आत्मव्यतिरिक्तः परः अन्यस्मै न स्तौति । पदं पदसंज्ञं सुप्तिङन्तं पदं परस्मैपदम् । नवानां अपि तिङां तिप् तस् अन्ति इत्यादीनां परस्मैपदसंज्ञा ॥

सततं श्लाघते कस्मै नीचो भुवि किमुत्तमम् ।
कर्तर्यौपरुचादीनां धातूनां किं पदं भवेत् ॥ ६२ ॥

**आत्मनेपदम्** ॥ आत्मने स्वस्मै । पदं प्रतिष्ठास्थानम् । आत्मनेपदं ते आते अन्ते इत्यादीनि नववचनानि भवन्तीति भावार्थः ॥

किमव्ययतया ख्यातं कस्य लोपो विधीयते ।
ब्रूत शब्दविदो ज्ञात्वा समाहारः क उच्यते ॥ ६३ ॥

**स्वरितः** ॥ स्वर् अव्ययं स्वर्गे निपातः । इतः इत्संज्ञकस्य । स्वरितः । ह्रस्वादयस्त्रयः स्वराः प्रत्येकमुदात्तानुदात्तस्वरितसंज्ञाः । समाहारः स्वरित इति तात्पर्यार्थः ॥

इति शाब्दीयजातिः ।

शास्त्राज्जातं शास्त्रजं पृष्टम् ॥

मेघात्यये भवति कः सुमदः सुभगं च किं कमधरन्मुरजित् ।
कटुतैलमिश्रितगुडो नियतं विनिहन्ति कं त्रिगुणसप्तदिनैः ॥ ६४ ॥

**श्वासरोगम्** ॥ श्वा भषकः तेषु दिनेषु मैथुनेच्छो भवेत् । सरस्तडाकम् । अगं गोवर्धनपर्वतम् । श्वासरोगम् ॥

कीदृक्प्रातर्दीपवर्तेः शिखा स्या-
दुष्टैः पृच्छत्याभजन्ते मृगाः किम् ।
देवामात्ये किं गते प्रायशोऽस्मि-
ल्लोकः कुर्यान्नो विवाहं विविक्तः ॥ ६५ ॥

**विभाकरभवनम्** ॥ विभा विगता भा कान्तिर्यस्याः सा । हे करभ उष्ट्र । वनम् । विभाकरभवनं विभाकरस्य सूर्यस्य भवनं गृहं तत् । सिंहराशिं गते जीवे लोका विवाहादिशुभकार्याणि न कुर्वन्ति । सिंहस्याधिपतिः सूर्यः ॥

इति शास्त्रजजातिः ।

वर्ण एवोत्तरं यत्र तद्वर्णोत्तरमुच्यते ।
वाक्यं यत्रोत्तरं तत्तु वाक्योत्तरमिति स्मृतम् ॥ ६६ ॥

वर्णः एकाक्षरमेव उत्तरं यस्मिन् तत् वर्णोत्तरं पृष्टम् ।

कौ विख्यातावहेः शत्रू शोकं वहति किं पदम् ।
कोऽभीष्टोऽतिदरिद्रस्य सेव्यन्ते के च भिक्षुभिः ॥ ६७ ॥

**वीहाराः** ॥ 'अहेः शत्रू' इति पाठे विश्च विश्च वी गरुडमयूरौ । 'कौ शत्रू भुवि विख्यातौ' इति पाठे उश्च इश्च वी ईश्वरकंदर्पौ । हा इति खेदे । राः द्रव्यम् । वीहाराः तीर्थभूमयः प्रासादाः देवायतनानि वा ॥

किं मुञ्चन्ति पयोवाहाः कीदृशी हरिवल्लभा ।
पूजायां किं पदं कोऽग्निः कः कृष्णेन हतो रिपुः ॥ ६८ ॥

**कंसासुरः** ॥ कं जलम् । सा एन कृष्णेन सह वर्तमाना लक्ष्मीः । 'सुः पूजायाम्' । रोऽग्निः । कंसासुरः कंसासुरनामा दैत्यः ॥

इति वर्णोत्तरजातिः ।

वाक्यमेव उत्तरं यस्मिन् तत् वाक्योत्तरं पृष्टम् ॥

दधौ हरिः कं शुचि कीदृगभ्रं
पृच्छत्यकः किं कुरुते सशोकः ।
श्लोकं विधायापि किमित्युदारः
कविर्न तोषं समुपैति भूयः ॥ ६९ ॥

**अगमकमकरोदिति** ॥ 'तिङ्सुबन्तचयो वाक्यम्' इत्यमरः । अगं गोवर्धनपर्वतम् । न विद्यते कं जलं यत्र तत् अकम् । हे अक न विद्यते कं सुखं यस्य सः हे दुःखिन् । रोदिति रोदनं करोति । अगमकमकरोदिति । एनं श्लोकं अगम्यं अकरोत् इति विचारयन् तुष्टो न भवति । इदं वृत्तं मयापि दुर्बोधम् ॥

लक्ष्मीधरः पृच्छति कीदृशः स्या-
न्नृपः सपत्नैरपि दुर्निवारः ।
अकारि किं ब्रूहि नरेण सम्यक्
पितृत्वमारोपयितुं स्वकीयम् ॥ ७० ॥

**समजनितनयः** ॥ हे सम मा लक्ष्मीस्तया सह वर्तमानः हे लक्ष्मीधर । हे धनवन् वा । हे कृष्ण । जनितः कृतो नयो न्यायो येन सः जनितनयः । समजनि तनयः तनयः पुत्रः समजनि उत्पादितः ॥

इति वाक्योत्तरजातिः ।

इति द्वितीयः परिच्छेदः ।

## तृतीयः परिच्छेदः ।

**श्लोक एवोत्तरं यत्र तच्छ्लोकोत्तरमुच्यते ॥ १ ॥**

श्लोक एवोत्तरं यत्र तत् श्लोकोत्तरं प्रष्टम् ॥

कं देवं केऽर्चयन्ति स्फुटरुचि निशि किं किदृशी दुःखिनी स्त्री
कीदृक्चक्रं सदास्ते क च तव विजयी प्रावृषं कीदृशं खम् ।
कामाहुः प्रेतयोग्यां कथय सुकृतिनः कीदृशाः स्युः पुमांसः
कं दत्ते कं च धत्ते गगनतलमलं प्रेक्षणीयं जनानाम् ॥ २ ॥

प्लक्षः कीदृक् चकास्ति स्फुटनवकुसुमाशोकमासाद्य कालं
किं मुञ्चन्त्यम्बुवाहा भवदरिनिवहे संज्वरः किंभवश्च ।
किं नेत्रप्रावृति स्यादतिशयलघवः के च को व्रीहिभेदः
प्रायेण प्रावृषेण्याः प्रियतमदिवसाः कीदृशाः कीदृशाः स्युः ॥३॥

**अंजनाभमह्वावारिवाहौघनिचिताम्बराः । कदंबकंदलीकंदरजःपक्ष्मलवायवः** ॥ अं कृष्णम् । जनाः लोकाः । भं नक्षत्रम् । नास्ति ह्वावो मुखविकारो यस्याः सा अह्वावा । अराणि विद्यन्ते यस्मिन् तत् अरि । बाहौ हस्ते । घनो मेघोऽस्यास्ति तत् घनि । चितां वराः श्रेष्ठाः । एकं कदं कं जलं ददाति सः कदो मेघस्तम् । द्वितीयं बकं पक्षिणम् । दलानि पर्णानि विद्यन्ते यस्य सः दली । कं जलम् । दराद्भयाज्जातो दरजः । 'पक्ष्म स्यान्नेत्ररोमणि' । लवाः ह्रस्वकणाः । यवो धान्यभेदः । अञ्जनाभमह्वावारिवाहौघनिचिताम्बराः । अञ्जनाभाः कज्जलवर्णा ये महावारिवाहाः मेघास्तेषामोघेन समूहेन निचितं व्याप्तं अम्बरं आकाशं येषु दिवसेषु ते कदंबकंदलीकंदरजःपक्ष्मलवायवः कदम्बानां वृक्षविशेषाणां कन्दलीकन्दानां च वनस्पतिविशेषाणां वा रजोभिः परागैः पक्ष्मलाः पुष्टाः वायवो येषु ते ॥

कुर्यादुद्वेगवन्तं कमपि निशि सरः कीदृशं क्वास्ति वक्रे
वक्ता निन्द्यः कया स्यात्परिषदि नियतं मन्दसंबोधनं किम् ।
वर्णोपान्त्यं कमूचुः किमसुररिपुणा नन्दगोपालयेऽस्तं
कः प्रालेयाद्रिपुत्रीकुचकलशलुठत्पाणिरेणाङ्कमौलिः ॥ ४ ॥

कीदृक्कस्येह बन्धुः सुकृतमपहरत्प्रेयसी (?) का युगान्ते
कीदृग्भीर्तिं विधत्ते धनुरवनिरुहं कंचिदामन्त्रयस्व ।
दैत्यः कंसद्विषा कः कथय विनिहतो गद्गदः कः प्रतीतः
कीदृक्कीदृग्वसन्तः प्रियतम भवतः प्रीतये नित्यमस्तु ॥ ५ ॥

**कोकिलालापवाचालसहकारमनोहरः । अशोकस्तबकालीनमत्तालिमधुरस्वरः** ॥ कोकि कोकाश्चक्रवाकाः पक्षिणो विद्यन्ते यस्मिन् तत् ।

काला लाल इति प्रसिद्धम् । अपवाचा हीनवाण्या । हे अलस । हकारं मातृकायासु शषसह(ळ) इति हकारस्यान्त(स्योपान्त्य)त्वम् । अनः शकटम् । हरो रुद्रः । अशोकः शोकरहितः भ्राता । तव भवतो भवति (?) । काली संहारकर्त्री देवी । नमत् नमनशीलम् । हे तालि ताडनाम प्रसिद्धम् । मधुः मधुनामा दैत्यः । अस्वरः शब्देन रहितः । कोकिलालापवाचालसहकारमनोहरः कोकिलानां पिकानामालापेनान्योन्यजल्पनेन वाचालाः सशब्दा ये सहकारा आम्रवृक्षास्तैर्मनो हरति सः । अशोकस्तबकालीनमत्तालिमधुरस्वरः अशोकानां वृक्षविशेषाणां स्तबके गुच्छे आलीना अभिव्याप्ता ये मत्ता अलयो भ्रमरास्तेषां मधुरोऽतिमिष्टः स्वरो ध्वनिविशेषो यस्मिन्सः ॥

इति श्लोकोत्तरजातिः ।

खण्डोत्तरं भवेदर्धं

खण्डमर्धमेव उत्तरं यस्मिन् तत् खण्डोत्तरं पृष्टम् ॥

का चक्रे हरिणा धने कृपणधीः कीदृग्भुजंगेऽस्ति किं
कीदृक्कुम्भसमुद्भवस्य जठरं कीदृग्यियासुर्वधूः ।
श्लोकः कीदृगभीप्सितः सुकृतिनां कीदृङ् नभो निर्मलं
क्षोणीमाह्वय सर्वगं किमुदितं रात्रौ सरः कीदृशम् ॥ ६ ॥

कुमुद्वनपरागरंजितांभोविहितगमागमकोकमुग्धरेखम् । कुमुद् पृथ्व्याः हर्षोऽकारि । पृथ्वी उद्धृता इत्यर्थः । अवनपरा अवनं रक्षणं धनस्य गोपनं तत्र परा सावधाना । गरं विषम् । जितानि पीतानि अम्भांसि जलानि येन तत् जिताम्भः । विहितगमा विहितः कृतो गमो गमनं यया सा । गमकः अर्थाभिप्रायेण गम्यते प्राप्यते सः गमकः । अकमुक् कं पानीयं मुञ्चन्ति ते कमुचो मेघाः न विद्यन्ते कमुचो यस्मिन् तत् । मेघै रहितमित्यर्थः । हे धरे हे पृथ्वि । खं आकाशम् । कुमुदवनपरागरंजितांभोविहितगमागमकोकमुग्धरेखं कुमुदानां चन्द्रविकासिकमलानां वनानि तेषां परागेण सुष्ठुगन्धेन किंजल्केन वा रंजितं रङ्गयुक्तं कृतं अम्भो जलं यस्मिंस्तत् ईदृशं सरः । प्रथमविशेषणम् । पुनः कीदृशम् । विहितौ निष्पादितौ गमागमौ गमनागमने याभ्यां तौ विहितगमागमौ तौ च तौ कोकौ च ताभ्यां कृता मुग्धा सुन्दरा रेखा पङ्क्तिर्यस्मिन् तत् यतस्तौ चक्रवाकीचक्रवाकावन्योन्यं वियुक्तौ सन्तौ रात्रौ मिलनाय तीरात्तीरं पर्यटतः । तयोर्गमनागमनेन जलरेखायाः भवात् रात्रौ सर ईदृशं इति भावः ॥

मुण्डः पृच्छति किं मुरारिशयनं का हन्ति रूपं नृणां
कीदृग्वीरजनश्च कोऽतिगहनः संबोधयावञ्चितम् ।
का धात्री जगतो बृहस्पतिवधूः कीदृक्कविः कादृतः
कोऽर्थः किं भवता कृतं रिपुकुलं कीदृक्सरो वासरे ॥ ७ ॥

इति खण्डोत्तरजातिः ।

**विकचवारिजराजिसमुद्भवोच्छलितभूरिपरागविराजितं** । हे विकच विगताः कचाः केशा यस्य सः तत्संबोधनम् । हे वालरहित । वारि जलम् । महाप्रलये हरिः शेषशय्यायां समुद्रजले शेते । जरा वृद्धत्वम् । आजिसमुत् आजौ संग्रामे समुत् सहर्षः । भवः संसारः । हे अच्छलित हे अवञ्चित । भूः पृथ्वी । इप-रा इः कामस्तेन परा उत्कृष्टा नित्ययौवनवती । गवि वाण्याम् । राः द्रव्यम् । जितं सुगमम् । विकचवारिजराजिसमुद्भवोच्छलितभूरिपरागविराजितं विकचानां प्रफुल्लि-तानां वारिजानां कमलानां राजिः पङ्क्तिस्तस्याः समुद्भव उत्पन्न उच्छलितो यो भूरिः प्रचुरः परागः सौगन्ध्यं तेन विराजितं शोभितम् ॥

### श्लोकात्पादात्तदुत्तरम् ।

पादः श्लोकचतुर्थांश एव उत्तरं यस्मिन् तत्पादोत्तरं पृष्टम् ॥

विभर्ति वदनेन किं क इह सत्वपीडाकरं
कुलं भवति कीदृशं गलितयौवनं योषिताम् ।
बभार हरिरम्बुधेरुपरि कां च केन स्तुते
हृतः कथय कस्त्वया नगपतेर्भयं कीदृशात् ॥ ८ ॥

**विषमपादनिकुंजगताहितः** ॥ विषं गरलम् । अपात् न सन्ति पादाश्चरणा यस्य सः सर्पः । अनि नास्ति इः कामो यस्मिन् तत् अनि कंदर्परहितम् । कुं पृथ्वी-म् । जगता संसारेण । अहितः शत्रुः । विषमपादनिकुञ्जगताहितः विषमाणां दुर्गमाणां पादानां प्रत्यन्तपर्वतानां निकुञ्जेषु गहनस्थानेषु गता अहयः सर्पा यस्मिन् सः विष-मपादनिकुञ्जगताहिस्तस्मात् यत्र पर्वते शिलाया अधस्तात्सर्पाः निर्गच्छन्ति ततः पर्वताद्बिभीयते ॥

हरिर्वहति कां तवास्त्यरिषु का गता कं च का
कमर्चयति रोगवान्धनवती पुरी कीदृशी ।
हरिः कमधरद्बलिप्रभृतयो धरां किं व्यधुः
कया सदसि कस्त्वया बुध जितोऽम्बुधिः कीदृशः ॥ ९ ॥

**कुंभीरमीनमकरागमदुर्गवारिः** ॥ कुं पृथ्वीम् । भीः भयम् । ई लक्ष्मीः । अं विष्णुं गता । इनं सूर्यम् । अकरा नास्ति करो राजदण्डो यस्यां सा । अगं गोवर्धनप-र्वतम् । अदुः ददति स्म । गवा वाण्या वादेन कृत्वारिः प्रतिवादी जितः । कुम्भीरमीनम-करागमदुर्गवारिः कुम्भीरा नक्राश्च मीना मत्स्याश्च मकराश्च कुम्भीरमीनमकरास्तेषां आगमौ आगमनगमने ताभ्यां कृत्वा दुर्गं दुस्तरं वारि जलं यस्यासौ । ईदृशः समुद्रो भवति ॥

### इति पादोत्तरजातिः ।

चत्वार्यराणि पादाभ्यां नेमिं पादद्वयेन च ।
लिखित्वा दक्षिणावर्तं चक्रं प्रश्नमवेहि मे ॥ १० ॥

चक्रेण रथपादेन सदृशं श्लोकबन्धं विधाय प्रश्नः क्रियते । इत्यतश्चक्रप्रश्नम् ॥

कं चौरस्य च्छिनत्ति क्षितिपतिरनघः किं पदं वक्ति कुत्सां
क्षोणीसंबोधनं किं वदति कमलभूः का च विश्वं बिभर्ति ।
चक्राङ्गामन्त्रणं किं कथमपि सुजनः किं न कुर्यादनार्ये
कीदृग्भोक्तुः पुरं स्यात्पयसि वद कुतो मीनपङ्क्तिर्बिभेति ॥ ११ ॥

किं स्वच्छं शारदं स्याद्वदति वृषगतिः कोऽशुमाली पवित्रः
कोऽस्मिन्किं जीवनं कां विरचयति कविर्वह्निसंबोधनं किम् ।
नाकाङ्क्षन्ति स्त्रियः कं तनुरसुररिपोः कीदृशी कश्च मूकः
सम्यक्प्रीतिं तडागः प्रियतम तनुते कीदृशः कीदृशस्ते ॥ १२ ॥

करंकुकोककुररकलहंसकरंबितः । सरोजकोमलोद्गारनीरसंसक्तमारुतः ॥ करं हस्तम् । कुशब्दो निन्दार्थः । कुपुरुषः । हे को हे पृथ्वि । हे क हे ब्रह्मन् । कुः पृथ्वी । हे अर 'आरा' इति लोकभाषा । कलहं वाग्युद्धम् । सकरं दण्डयुक्तम् । वितः बकादिपक्षिणः सकाशात् । सरस्तडागम् । हे अज हे शंभो । कः सूर्यः । अमलः मलरहितः । निर्मल इत्यर्थः । उद् उदकम् । गीः वाणी । हे र हे अग्ने । नीरसं निर्गतो रसः शृङ्गारात्मको यस्मात् सः नीरसस्तम् । सक्तमा सक्ता लग्ना मा लक्ष्मीर्यस्यां सा । अरुतः न विद्यते रुतं शब्दो जल्पनं यस्मिन्सः । करंकुकोककुररकलहंसकरंबितः । करंकवः पक्षिविशेषाश्च कोकाश्चक्रवाकश्च कुरराः क्रौञ्चाश्च कलहंसाः हंसविशेषाश्च एतैः पक्षिसमूहैः करम्बितो व्याप्तस्तडागः प्रीतिकरो भवेदित्याशयः । पुनः कीदृशस्तडागः । सरोजकोमलोद्गारनीरसंसक्तमारुतः सरोजानां कमलोऽधिकसौरभ्यवान् य उद्गारः उद्गिरणं निःश्वाससदृशं यस्मिन् तत् । अर्थात्परिमलवत् यन्नीरं जलं तेन सक्तो मारुतो वायुर्यस्मिन् तडागे सः ॥

इति चक्रजातिः ।

वर्णद्वयद्वयैकैकदलभूतदलाष्टकम् ।
सर्वोत्तराद्यवर्णेन पद्मं स्यात्कृतकर्णिकम् ॥ १३ ॥

अष्टदलैर्नालेन च सहितं पद्मं प्रश्नोत्तरम् ॥

पुण्यात्मा वद कीदृशः सरसिजैः के मोदिताः कीदृश-
स्त्वद्वैरी गतचक्षुषः कुलमभूत्कीदृक्त्वया के जिताः ।
बद्धालिः सलिलाशयः कथय भोः कीदृक्च आक्षेपवा-
क्शब्दः कुत्र न तस्करादिकभयं दत्ते भवेत्प्रायशः ॥ १४ ॥

अप्पित्तं गवि कीदृशं निगदितो मुक्तः पुमान्कीदृशः
कस्माद्बिभ्यति कौशिका भुवि कृतः कीदृक्त्वया तस्करः ।
हस्ती स्यान्ननु कीदृशो बहुमतः शोच्यो रणः कीदृशः
कीदृक्षः पुरुषः पराप्रतिहतः कीदृग्भवेद्वासुकिः ॥ १५ ॥

**अलयः । अपश्यत् । अरयः । अररे । अबन्धः । अहस्तः । अगजः । अहीनः** ॥ अलयः ए कृष्णे लयो ध्यानविशेषो यस्य सः । अलयो भ्रमराः । अपश्यत् 'शीङ् स्वप्ने' 'अद भक्षणे' शी शयनं अत् भक्षणं शीश्च अश्च श्यती अपगते श्यती शयनभक्षणे अस्यासौ अपश्यत् । मच्छत्रुः रात्रौ शयनं दिवसे चादनं न करोति । भयभीतत्वात् । न पश्यति विलोकयति तत् । अपश्यत् । अरयः शत्रवः । अरयः नास्ति रयो वेगो यस्य सः । अररे अरे इत्यर्थे अररे इति निपातः । अरे नीच हीनसंबोधने दीयते । अररे कपाटे । 'कपाटमररं तुल्ये' इत्यमरः । अर्थात् कपाटे दत्ते सति गृहान्तस्तस्करादेर्भयं न भवेदित्यभिप्रायः । अबन्धः अपां पानीयानां अन्धो भक्षणं यस्य तत् सकारान्तः । नास्तिबन्धो रज्ज्वादेर्बन्धनं यस्यासौ अबन्धः । बन्धनरहित इत्यर्थः । अहस्तः दिवसात् । नास्ति हस्तौ यस्यासौ अहस्तः हस्ताभ्यां रहितः । अगजः अगेषु पर्वतेषु जातोऽगजः पर्वतसंबन्धी । न विद्यन्ते गजाः हस्तिनो यस्मिन् सः अगजः । हस्तिरहिता सेना शोभां न लभते इत्यर्थः । अहीनः न हीनोऽहीनः । समर्थ इत्यर्थः । अहीनः अहीनां सर्पाणां इनः स्वामी ॥

इति पद्मोत्तरजातिः ।

काकस्येव पदं त्र्यस्रं यत्तत्काकपदं मतम् ।

काकस्य पदं चरणाकृतिरिव त्र्यस्रं पदं आकारो यस्मिन् तत्काकपदं प्रश्नोत्तरम् ॥

कुतः कः स्यात्कीदृक्कथय विषवैद्य स्फुटमिदं
रिपोः कः कीदृक्षो भवति वशगः कश्च कलभः ।
प्रवीणः संबोध्यः सुभग वद कौ रत्नवचनौ
सुरूपे विख्यातिं जगति महतीं का गतवती ॥ १६ ॥

**नागदरतः । नागतनयः । नागरमणी** ॥ नागदरतः नागानां सर्पाणां दरो भयं तस्मात्, ना पुमान् अगदरतः अगदेषु विषापहारेषु औषधेषु रतः आसक्तः । अयमभिप्रायः—यदा नागेभ्यो भयं भवेत्तदा मनुष्योऽगदरतो विषवैद्यः स्याज्जाङ्गुलीविद्याविशारदः स्यात् । कुतश्चित्सर्पकीलनमन्त्रं पठेत् । ना पुमान् गतनयः गतस्त्यक्तो नयो न्यायो नीतिरूपं येनासौ । नागतनयः नागानां हस्तिनां तनयः पुत्रः । हे नागर हे विचक्षण । मणी चन्द्रकान्तिप्रमुखौ हीरकौ । नागरमणी नागानां नागकुमारदेवविशेषाणां रमणी स्त्री । तासां तौ सौन्दर्यविशेषेण श्लाघ्येते ॥

काकपदजातिः ।

तिर्यगन्योऽन्यरेखाभिर्गोमूत्री द्विपदी द्वये ॥ १७ ॥

गोर्वृषभस्य मूत्रं वक्रगत्या जायते तद्वद्बन्धो यस्याः सा गोमूत्रीप्रश्नोत्तरम् ॥

मामाहुर्युवतीममङ्गलवती कीदृग्ग्रहाणां गतिः
संबोध्या वद मत्स्यवेधनपरः कीदृग्भवेत्पामरः ।
कीदृग्वाल्मिकवेश्म कोऽस्तनमुरो धत्ते सुरैरुच्यते
गीः कीदृङ् न कदापि कम्बुरहितं वाञ्छन्ति कं योषितः ॥१८॥
कीदृक्पान्थकुलं तमो हरति का किं चक्रसंबोधनं
रम्या चम्पकशाखिनः कथय का कश्चाटचोऽर्थे भवेत् ।
किं क्षिप्तं बलिवैरिणा मुररिपोः काह्वा श्मशानेऽस्ति का
क्ष्मा कीदृग्भवति स्म पूर्वमधुना कीदृक्पुनर्वर्तते ॥ १९ ॥

अजरामशुभाचारबलिशीलविनोदिता । भुजंगमनिभासारकलिकालजनोचिता ॥ अजरां नास्ति जरा वृद्धत्वं यस्याः सा ताम् । अशुभा शुभकारिणी न भवति । हे चार हे गते । बलिशी बलिशमस्यास्ति सः । 'बडिशं मत्स्यवेधनम्' इत्यमरः । लवि लवो नामा सीतारामयोः पुत्रः । लवो विद्यते यस्मिन् तत् लवि । ना पुमान् । उदिता उदयं प्राप्ता । यस्य पुरुषस्य यादृश उदयो भवति तस्य तादृशी देववाणी भवेदिति भावः । भुजं हस्तम् । गमनि गमनं चलनं पर्यटनं विद्यते यस्य तत् इन्नन्तः । भा कान्तिः । हे सार सह अरैस्तिर्यक्काष्ठविशेषैर्वर्तमानं सारम् । तत्संबोधनम् । कलिका कोरकः । अविकसितकलीत्यर्थः । आलज् प्रत्ययः । 'आलजाटचौ बहुभाषिणि' । अनः शकटम् । हे अ हे कृष्ण । चिता प्रसिद्धा । अजरामशुभाचारबलिशीलविनोदिता अजश्च रामश्चाजरामौ । अजो दशरथपिता, रामश्च सीतापतिः । तयोः शुभेन आचारेण । तथा बलिराजा प्रसिद्धः वामनेन यो याचितः तस्य शीलेन आचारेण च विनोदिता हर्षं प्रापिता इति पूर्वमासीत् । अधुना कीदृशी पृथ्वी । भुजंगमनिभासारकलिकालजनोचिता भुजंगमैः सर्पैर्निभास्तुल्याः वक्रगतयो येऽसाराः निःसत्त्वाः कलिकालजनाः कलियुगमनुष्यास्तेषां मनुष्याणामुचिता योग्या ॥

इति गोमूत्रजातिः ।

वर्णैनैकेन च द्वाभ्यां सर्वैर्वा सर्वदिग्गतैः ।
उत्तरं सर्वतोभद्रं दुष्करं तदिदं यथा ॥ २० ॥

सर्वतः समन्तात् वर्णस्वरान्संगृह्य प्रश्नोत्तरं क्रियतेऽतः स सर्वतोभद्रं प्रश्नोत्तरम् ॥

कस्त्यागे धातुरुक्तस्तव रिपुहृदि का भूषणं के स्तनानां
को दुःखी कश्च शब्दो वदति वद शुचं कौ रिपू ख्यातवीर्यौ ।
शृङ्गारी कीदृशः का रणशिरसि भयाद्भङ्गमाप्नोति सेना
को दानार्थाभिधायी शिरसि शिरसि कौ युध्यतः संप्रहृत्य ॥२१॥
कीदृक्कोयार्थिनी स्त्री भवति मदकरः प्रायशः को दुराढ्यः
कस्मिन्मन्दायतेऽसौ नियतमुडुपतिः प्रेयसी का मुरारेः ।

विख्यातौ वाहनौ कौ द्रुहिणमुरभिदोः कीदृगाखेटकश्री
कीदृक्तैर्वाचिराभा समिति गतभयाः के गतौ कश्च धातुः॥२२॥

हारावी ॥ कस्त्याग इति श्लोकद्वये एकोनविंशतिपृष्टानि सन्ति । हारावीत्यक्षरत्रयेष्वेकोनविंशत्युत्तराणि ज्ञेयानि धीमद्भिः । हारावीत्यतएव हा इति 'ओहाक् त्यागे' ॥ १ ॥ आरा 'आरा चर्मप्रभेदिका' चर्मकाराणां चर्मवेधनशस्त्रम् । शत्रूणां हृदि आरासदृशं दुःखं वर्तते ॥ २ ॥ हाराः पुष्पाणां मुक्तानां च हाराः प्रसिद्धाः ॥ ३ ॥ अहावी न विद्यते हावो मुखविकारो यस्यासौ अहावी । दुःखिनो जनस्य मुखे हावो हास्यादिविक्रिया न भवेदित्यभिप्रायः ॥ ४ ॥ हा हा इति खेदे ॥ ५ ॥ वी उश्च इश्च वी । उः ईश्वरः । इः कामः । ईश्वरानङ्गयोर्वैरंप्रसिद्धमेवास्ति । अनङ्गो हि रुद्रेण दग्धः ॥ ६ ॥ हावी मुखविक्रियाहास्यादियुक्तः ॥ ७ ॥ अवीरा वीरैः सुभटैः रहिता । अवीरा सेना भनक्ति ॥ ८ ॥ रा 'रा दाने' रा इत्ययं धातुर्दानेऽस्ति ॥ ९ ॥ अवी मेषौ ऊर्णायू ॥ १० ॥ श्लोकः ॥ अवीहा अप्सुजले ईहा वाञ्छा यस्याः सा अवीहा ॥ ११ ॥ राः द्रव्यम् ॥ १२ ॥ राहौ विधुंतुदे ग्रहे ॥ १३ ॥ ई लक्ष्मीः ॥ १४ ॥ वी विश्च विश्च वी पक्षिणौ । हंसगरुडावित्यर्थः । ब्रह्मणो वाहनं हंसः कृष्णस्य वाहनं गरुड इति प्रसिद्धम् ॥ १५ ॥ वीहा विषु पक्षिषु ईहा वाञ्छा यस्याः सा ॥ १६ ॥ वीरा विगता इरा जलं यस्यां सा वीरा । जलरहिता न भवतीत्यर्थः ॥ १७ ॥ वीराः योद्धारः ॥१८॥ 'हा ओहाङ् गतौ' ॥ १९ ॥ एते सर्वेऽप्यर्थाःहारावीत्येतेष्वेव वर्णेषु भवन्त्यत एव सर्वतो भवतीति सर्वतोभद्रं नाम यथार्थम् ॥

इति सर्वतोभद्रजातिः ।

प्रतिलोमानुलोमाभ्यामुत्तरेण गतागतम् ।
मध्यवर्णविलोपेन तच्चानेकप्रकारकम् ॥ २३ ॥

गतं च प्रत्यागतं च गतप्रत्यागते ते विद्येते यस्मिन् तत् गतप्रत्यागतं प्रश्नोत्तरम् ॥

वद वल्लभ सर्वत्र साधुर्भवति कीदृशः ।
गोविन्देनानसि क्षिप्ते नन्दवेश्मनि काभवत् ॥ २४ ॥

क्षीरनदी ॥ अनेकप्रकारकं भवति । क्षीरनदी एतच्च पदं प्रतिलोमं वाच्यम् । प्रतिलोमो वामवाचना, अनुलोमो दक्षिणवाचना च । दीनरक्षी इत्येवं स्यात् । अस्यायमर्थः । दीनान् दुःस्थान् भिक्षाचरादीन् रक्षत इत्येवंशीलो दीनरक्षी । दीनपालक इत्यर्थः । क्षीरनदी क्षीरं दुग्धं तस्य नदी जाता । द्वितीयवारं अनुलोमं वाच्यम् ॥

यत्नादन्विष्य का ग्राह्या लेखकैर्मसिमल्लिका ।
घनान्धकारे निःशङ्कं मोदते केन बन्धकी ॥ २५ ॥

नालिकेरजा ॥ नालिकेराज्जाता नालिकेरजा । नालिकेरफलं प्रसिद्धम् । तद्वृक्षसत्कपत्रान्तःशलाकाया लेखनी समीचीना भवेत् । एतदेव प्रतिलोमं वाच्यते । जारकेलिना । उपपतिस्तु जारः स्यात् । जारेण सह केलिः क्रीडा तया ॥

अमुरसुरनरेन्द्रैरुह्यते का शिरोभि-
स्तनुरपि शुचिवस्त्रे कातिविस्तारमेति ।
वदति कमलयोनिः सेव्यते केन पुष्पं
मधुरमसृणमृद्वी का भवेदुत्पलस्य ॥ २६ ॥

**मालिका** ॥ माला एव मालिका । पुष्पादिमाला देवानां शिरसि शाश्वती भवत्येव । तदेव प्रतिलोमं वाच्यम् । कालिमा श्यामता । उज्ज्वले वस्त्रे मषीबिन्दुरूपापि बहुविस्तारं प्राप्नुयादिति भावः । **कालिना** । हे क हे ब्रह्मन् । अलिना भ्रमरेण । तदेव प्रतिलोमं वाच्यम् नालिका । नाली एव नालिका नालं । इदं च प्रश्नचतुष्टयं मन्थानाकृत्या लिखित्वा वाचनीयम् । तथा कृते मध्यस्थो लिकारश्चतुरो वारान् वाच्यते ॥

हिमांशुखण्डं कुटिलोज्ज्वलप्रभं
भवेद्वराहप्रवरस्य कीदृशम् ।
विहाय वर्णं पदमध्यसंस्थितं
न किं करोत्येव जिनः करोति किम् ॥ २७ ॥

**दंष्ट्राभं** ॥ दंष्ट्रा दाढा दंष्ट्रावत् आभा शोभा यस्य तत् । अथवा दंष्ट्रा इव भाति दीप्यते तत् । द्वितीयायामुदयं प्राप्तश्चन्द्रो वक्रोज्ज्वलगुणेन सूकरदंष्ट्रया सहोपमीयते । दंष्ट्राभमित्यत्र मध्यस्थः ष्ट्रा इति वर्णस्त्यज्यते । पश्चाद्गतप्रत्यागतरीत्या वाच्यम् । तच्च दम्भन्निति स्यात् । जिनो दम्भं कपटं न करोति । विपरीतवाचनया भंदमिति स्यात् । जिनो भन्दं कल्याणं करोति । 'भदि कल्याणे' । एवं मध्यस्थितवर्णलोपेन गतप्रत्यागतं दर्शितम् ॥

वसन्तमासाद्य वनेषु कीदृशाः पिकेन राजन्ति रसालभूरुहाः ।
निरस्य वर्णद्वयमत्र मध्यमं तव द्विषां कान्ततमा तिथिश्च का ॥२८॥

**कांतगिरा** ॥ कान्ता मनोहरा गीर्वाणी यस्यासौ कान्तगीः तेन कान्तगिरा । अत्रोत्तरमध्यादनुस्वारः । अयं हि मन्थानाकृतिचित्रबन्धः । मन्थानं 'रवाइनुंफूल' इति भाषा तस्य कृतिराकारः तद्वच्चित्रबन्धः । तकारगिकाररूपं वर्णद्वयं त्यक्त्वा वाच्यम् । कारा बन्दिगृहम् । वामवाचनया राका । 'राका पूर्णे निशाकरे' । पूर्णे मासे जातत्वाद्राका पूर्णमासी । अनेकप्रकारकं दर्शितम् ॥

इति गतप्रत्यागतजातिः ।

आदौ मध्ये तथान्ते वा वर्धन्ते वर्णजातयः ।
एकद्वित्रादयो यत्र वर्धमानाक्षरं हि तत् ॥ २९ ॥

वर्धमानानि अक्षराणि यस्मिन् तत् वर्धमानाक्षरं प्रश्नोत्तरम् ॥

किमनन्ततया ख्यातं पादेन व्यङ्गमाह्वय ।
जनानां लोचनानन्दं के तन्वन्ति घनात्यये ॥ ३० ॥

**खंजनाः** ॥ खं आकाशम् । आकाशस्य सर्वत्र वर्तमानत्वादन्तो नास्ति । हे खंज हे खोड । खंजनाः मध्यदेशे पोदनो नाम पक्षिविशेषः खंजन उच्यते । अत्र त्वेकैकाक्षरवृद्ध्या उत्तरत्रयं कृतम् ॥

उरःस्थलं कोऽत्र विना पयोधरं बिभर्ति संबोधय मारुताशनम् ।
वदन्ति कं पत्तनसंभवं जनाः फलं च किं गोपवधूकुचोपमम् ॥ ३१ ॥

**नागरंगं** ॥ ना पुमान् । हे नाग हे सर्प । नागरं नगरे भवो नागरस्तम् । नागरंगं नारंगीफलम् । अत्रैकैकाक्षरवृद्ध्या प्रश्नोत्तराणि द्रष्टव्यानि ॥

प्रायेण नीचलोकस्य कः करोतीह गर्वताम् ।
आदौ वर्णद्वयं दत्त्वा ब्रूहि के वनवासिनः ॥ ३२ ॥

**शबराः** ॥ राः द्रव्यम् । शबराः भिल्लाः । इति पश्चादक्षरप्रदानेनोत्तरं दर्शितम् ॥

सानुजः काननं गत्वा कीकसेयाञ्जघान कः ।
मध्ये वर्णत्रयं दत्वा रावणः कीदृशो वद ॥ ३३ ॥

**राक्षसोत्तमः** ॥ रामः दाशरथिः । एतस्य एवोत्तरस्य राकारमकारयोर्मध्ये त्रीण्यक्षराणि क्षसोत्त इति लिखित्वा वाच्यम् । राक्षसोत्तम इति स्यात् । राक्षसानां मध्ये उत्तमः श्रेष्ठः । इत्येवं मध्ये वर्णप्रदानेन वर्धमानं दर्शितम् ॥

धत्ते वियोगिनीगण्डस्थलपाण्डुफलानि का ।
वद वर्णौ विधायान्ते सीता दृष्टा भवेत्कया ॥ ३४ ॥

**लवलीलया** ॥ लवली लताविशेषः । अस्यैवोत्तरस्यान्ते वर्णौ द्वौ लया इति कृत्वा वाच्यम् । लवलीलया लवो नाम पुत्रस्तस्य लीला क्रीडा तया । इत्येवमन्ते वर्णप्रदानेन वर्धमानं दर्शितम् ॥

विष्णोः का वल्लभा देवी लोकत्रितयपाविनी ।
वर्णावाद्यन्तयोर्दत्वा कः शब्दस्तुल्यवाचकः ॥ ३५ ॥

**समानः** ॥ मा लक्ष्मीः । एतस्यैवादौ सकारोऽन्ते नकारश्च एतौ वर्णौ दत्वा वाच्यम् । समानः तुल्यः । इत्येवमादावन्ते च वर्णप्रदानेन वर्धमानं दर्शितम् ॥

**इति वर्धमानाक्षरजातिः ।**

आदितो मध्यतोऽन्ताद्वा हीयन्ते वर्णजातयः ।
एकद्वित्र्यादयो यत्र हीयमानाक्षरं हि तत् ॥ ३६ ॥

हीयमानानि अक्षराणि यस्मिन् तत् हीयमानाक्षरं प्रश्नोत्तरम् ॥

वसन्तमासाद्य बनेषु राजते विकाशि किं वल्लभ पुष्पमुच्यताम् ।
विहंगमं कं च परिस्फुटाक्षरं वदन्ति कं पङ्कजसंभवं विदुः ॥ ३७ ॥

**किंशुकं** ॥ किंशुकः पलाशः । खाखरो । किंशुके भवं किंशुकम् । केसूडफूल । अत्र तदेव आदिमवर्णपरिहारेण वाच्यम् । शुकं कीरं । शुकपक्षी शुद्धं वदिति । अत्रापि द्वितीयस्यापि वर्णस्य त्यागेन वाच्यम् । कं ब्रह्माणम् । विष्णोर्नाभिकमले ब्रह्मा जातः । कशब्दो ब्रह्मवाचकः प्रसिद्धः ॥

समुद्यते कुत्र न याति पांसुला समुद्यते कुत्र भवं भवेज्जलात् ।
समुद्यते कुत्र तवापयात्यरिः प्रहीणसंबोधनवाचिकं पदम् ॥ ३८ ॥

**हिमकरे** ॥ हिमकरे चन्द्रे उद्गते सति उद्योतत्वादन्यत्र यातीति दृश्यते अतो न याति । तद्विधानां तासां त्वन्धकार एव समीचीनः । उक्तोत्तरमध्यात् हि इति प्रथमाक्षरत्यागेन कृत्वोच्यते । मकरे मकरे मत्स्ये उत्पन्ने सति । द्वितीयाक्षरत्यागेन वाच्यते । करे हस्ते सायुधे ऊर्ध्वीकृते सति शत्रुर्भज्यते । तृतीयाक्षरत्यागेन वाच्यते । रे 'रे दास' इति चामन्त्रणे । एवमादित एकैकाक्षरहान्या हीयमानं दर्शितम् ॥

तपस्विनोऽत्यन्तमहासुखाशया वनेषु कस्मै स्पृहयन्ति सत्तमाः ।
इहापि वर्णद्वितयं निरस्य भोः सदा स्थितं कुत्र च सत्वमुच्यताम् ३९

**तपसे** ॥ तपोगुणाय । तपस्विनां हि तप एव प्रियं भवति । वर्णद्वयत्यागात्से इत्यवशिष्यते । सकारभावः सकारे वर्तते । अत्राक्षरद्वयहान्या हीयमानाक्षरोदाहरणं दर्शितम् ॥

पुरुषः कीदृशो वेत्ति प्रायेण सकलाः कलाः ।
मध्यवर्णद्वयं त्यक्त्वा ब्रूहि कः स्यात्सुरालयः ॥ ४० ॥

**नागरिकः** ॥ नागरिकः नगरनिवासी चतुरो वा । एतस्यैव मध्यात् गरीति वर्णद्वयं त्यज्यते तदा नाक इति स्यात् । नाकः स्वर्गः । अत्र मध्यवर्णद्वयहानिर्दर्शिता ॥

यजमानेन कः स्वर्गहेतुः सम्यग्विधीयते ।
विहायाद्यन्तयोर्वर्णौ गोत्वं कुत्र स्थितं वद ॥ ४१ ॥

**यागविधिः** ॥ यजनं यागः यज्ञो दानं वा तस्य यथाप्रोक्तकरणं विधिः होमदानविधिरित्यर्थः । यागविधिरित्येतन्मध्यात्प्रथमान्तिमवर्णं त्यज्यते तदा गवि इति तिष्ठति । गविशब्दे गोत्वं वर्तते । एवमाद्यन्तवर्णयोस्त्यागेन हीयमानाक्षरं दर्शितम् ॥

इति हीयमानाक्षरजातिः ।

अन्योन्याक्षरवर्तिन्या चैकान्तरतयाथवा ।
शृङ्खलाबन्ध इत्युक्तः

शृङ्खलाया इव शृङ्खलाकारेण बन्धो रचनाविशेषः शृङ्खलाबन्धः इति प्रश्नोत्तरम् ।

पवित्रमतितृप्तिकृत्किमिह किं भटामन्त्रणं
ब्रवीति धरणीधरश्च किमजीर्णसंबोधनम् ।
हरिर्वदति को जितो मदनवैरिणा संयुगे
करोति ननु कः शिखण्डिकुलताण्डवाडम्बरम् ॥ ४२ ॥

**पयोधरसमयः** ॥ पयो जलम् । पाश्चात्यवर्णत्यागात् अग्रेतनवर्णग्रहणेन वाच्यते । हे योध । अत्र पकारस्त्यक्तः । अग्रेतनधकारो गृहीतः । पाश्चात्यरीत्या हे धर हे पर्वत, हे रस हे अजीर्ण । पर्वतं प्रति अजीर्णसंबोधनं उक्तम् । हे सम म लक्ष्मीस्तया सह वर्तमानः समः तत्संबोधनं हे हरे । मयः मयो नामा कश्चिद्दैत्यविशेषो हरेण हत इति भावार्थः । पयोधरसमयः पयोधरस्य समयः कालः । मेघागमे हि मयूरा विशेषेण नृत्यन्ति ॥

भवति जयिनी काजौ सेनाह्वयाधरभूषणं
वहति किमहिः पुष्पं कीदृक्कुसुम्भसमुद्भवम् ।
महति समरे वैरी वीर त्वया वद किं कृतः
कमलमुकुले भृङ्गः कीदृक्पिबन्मधु राजते ॥ ४३ ॥

**परागरंजितः** ॥ परा उत्कृष्टा । हे राग । पूर्ववदत्रापि पाश्चात्यो वर्णस्त्यज्यतेऽग्रेतनो गृह्यते । राग आरक्तत्वम् । अधरस्य आरक्ततैव प्रशस्यते । गरं गरलं रंजि रंजतीत्येवं शीलं तत् रंगयुक्तं । 'रंज रागे' । जितः सुगमम् । परागरंजितः परागेण केसरेण रंजितः प्रीणितमनाः । लोहमयश्रृङ्खलाकटकवत् अन्योन्यमक्षराणि संकल्पन्तेऽतः श्रृङ्खलाजातिः ॥

इति श्रृङ्खलाजातिः ।

आह्वानं किं भवति हि तरोः कस्यचित्प्रश्नविज्ञाः
प्रायः कार्यं किमपि न कलौ कुर्वते के परेषाम् ।
पूर्णं चन्द्रं वहति ननु का पृच्छति म्लानचक्षुः
केनोदन्याजनितमसमं कष्टमाप्नोति लोकः ॥ ४४ ॥

**नीरापकारेण** ॥ नीरापकारेणेत्यस्मिन्नेकाक्षरपरिहारेण । अत्र द्वितीयो रा इति वर्णः परित्यज्यते । हे नीप हे वृक्षविशेष । प्राग्वदेकान्तरितवर्णग्रहणेन परे अन्ये आत्मनः कार्याणि सर्वे कुर्वन्ति । परकार्यकृत्तु विरलः । राका पूर्णिमा । अत्र पूर्वे ये वर्णाः परित्यक्तास्त एव योज्यन्ते । हे काण एकाक्ष । सर्वैरेवाक्षरैः नीरापकारेण नीरस्य जलस्य अपकारः अभावस्तेन । नीरं विना तृषा कष्टं ददाति ॥

का संबुद्धिः सुभट भवतो ब्रूहि पृच्छामि सम्यक्
प्रातः कीदृग्भवति विपिनं संप्रवृद्धैर्विहंगैः ।
लोकः कस्मिन्प्रथयति मुदं का त्वदीया च जैत्री
प्रायो लोके स्थितमिह सुखं जन्तुना कीदृशेन ॥ ४५ ॥

**वीहारसेविना** ॥ हे वीर । अत्रापि प्राग्वदेकान्तरिता एव वर्णा गृह्यन्ते । रवि रवः शब्दो विद्यते यस्मिन् तत् रवि शब्दयुक्तम् । त्यक्ताक्षरसंयोजनया उत्तरं कर्तव्यम् । हासे हास्ये । सेना सैन्यं । वीहारसेविना वीहार उपवनादिषु खेलनं देवायतनं जिनालयं वा वीहारं सेवते इत्येवंशीलो वीहारसेवी तेन । अथवा वीहारस्य सेवा विद्यते यस्यासौ तेन । वीहारसेवायुक्तेन मनुष्येण सुखमनुभूयत इत्यर्थः । एकान्तरितवर्णग्रहणेनात्र श्रृङ्खलाबन्धस्य द्वितीयो भेदः ॥

इति एकान्तरितश्रृङ्खलाजातिः ।

ग्रन्थिमान्नागपाशकः ॥ ४६ ॥

ग्रन्थिमान्नागपाशकः यस्मिन्नागपाशबन्धे ग्रन्थिर्बध्यते सः ग्रन्थिमान् । नागानां सर्पाणां पाशबन्ध एव नागपाशकः प्रश्नोत्तरम् ॥

गोष्ठी विदग्धजनवत्यपि शोचनीया
कीदृग्भवेत्तरणिरश्मिषु का सदास्ति ।
दुर्वारदर्पदलितामरनायकापि
कीदृग्जयकारि सुरशत्रुचमूगृहेण ॥ ४७ ॥

तारकविरहिता ॥ प्रथमाक्षरद्वयत्यागेन वाच्यते । कविरहिता कविना पण्डितेन रहिता । अन्त्याक्षरद्वयत्यागेन पश्चादानुपूर्व्या वाच्यते । रविकरता रवेः सूर्यस्य करता किरणभावः । अत्र प्राक् कविरहितेत्युत्तरं कृत्वा पश्चात् रविकरता इत्युत्तरं कृतम् । एवं कविरवि एतयोर्मध्ये वि इति वर्णो नागपाशबद्धः । तत् बद्धत्वं च बन्धदर्शनाज्ज्ञेयं प्रश्नार्थविद्भिरिति । तारकविरहिता तारकनामा दैत्यस्तेन विरहिता वियुक्ता कृता ॥

कीदृक्परैरुपहतो भवति क्षितीशः
पृच्छत्यनुच इह किं विदितं पवित्रम् ।
विच्छिन्नपाणिचरणो जनको यदीयः
कीदृक्परैरभिहितः स पुमान्पुनः स्यात् ॥ ४८ ॥

व्यंगतनयः ॥ अत्राप्येकाक्षरपरिहारेण वाच्यते । गतनयः गतस्त्यक्तो नयो न्यायो येनासौ अन्यायी राजा । अन्त्याक्षरैकत्यागेन पश्चादानुपूर्व्या वाच्यते । हे नत हे अप्रांशो वामन, गव्यं गोरिदं गव्यं गोमूत्रं गोमयं क्षीरं दधि सर्पिः इति पञ्च । व्यङ्गतनयः । विगतानि अङ्गानि हस्तादीनि यस्यासौ व्यङ्गस्तस्यायं तनयः पुत्र इत्युच्यते परैः । अत्रापि गतनत एतयोर्मध्यस्थप्रकारो ग्रन्थिगत्या बाध्यतेऽत एव नागपाशःनागपाशजातिरिति॥

इति नागपाशजातिः ।

भाषाभिश्चित्रितं यत्स्यात्संस्कृतप्राकृतादिभिः ।
सन्तश्चित्रं तदिच्छन्ति संशुद्धं त्वेकभाषया ॥ ४९ ॥

संस्कृतप्राकृतादिभिर्भाषाभिर्यच्चित्रितं रचितं स्यात् तत्पृष्टं चित्रं नाम । 'संस्कृतं प्राकृतं चैव सौरसेनी च मागधी । पैशाची चाप्यपभ्रंशः षड् भाषा विबुधैः स्मृताः'॥

किं न स्यात्कीदृक्षं महतोऽपि च तादृशस्य जलराशेः ।
दिणमणिकिरणप्फंसणपडिबुज्झं होइ किं गोसे ॥ ५० ॥

कमलवणं ॥ कं पानीयं अलवणं लवणं क्षारसस्तेन रहितं न भवति । समुद्रस्य जलं क्षारमेव भवेत् । सप्तानामपि समुद्राणां मध्ये प्रथमो लवणसमुद्रः । 'लवणक्षीरदध्याज्यसुरेक्षुस्वादुवारयः' इति सप्त समुद्राः । इति संस्कृतेन पृष्टं संस्कृतेनोत्तरं दत्तम् । अथ प्राकृतेन पृच्छति प्राकृतेनैवोत्तरं ददाति–दिणमणीति । अस्य संस्कृतं लिख्यते 'दिनमणिकिरणस्पर्शनप्रतिबुद्धं भवति किं प्रातः' इति । उत्तरम्—कमलवणं कमलानां वनम् । वणमिति प्राकृतभाषा ॥

मत्स्यहितमम्बु कीदृक्पृच्छति रोगी निशासु किं भाति ।
कोऽनङ्गो वदति मृगः खे गम्मइ केरिसा रइणा ॥ ५१ ॥

**अविसामभमिरेण** ॥ अवि न विद्यन्ते वयः पक्षिणो यस्मिन् तत् पक्षिरहितम्। बकादिपक्षिणो मत्स्यान् घ्नन्ति । हे साम हे सरोग । आमो रोगस्तेन सहवर्तमानः तत्संबोधनम् । भं नक्षत्रं । हे एण हे मृग । इः कामः अनङ्गः । अग्रे प्राकृतरीत्या चोच्यते—खे गम्मइ केरिसा रइणा । अस्य संस्कृतम्—आकाशे गम्यते कीदृशेन सूर्येण इति । उत्तरम्—अविसामभमिरेण अविश्रामभ्रमिणा । अविश्रामा विश्रामरहिता भ्रमिर्भ्रमणं यस्य स तेन । भ्रमिशब्दस्य भमिर इत्यादेशः प्राकृतभाषायाम् । विश्रामरहितभ्रमणशीलः सूर्यो गगने भ्रमन्न कुत्रापि तिष्ठतीति तात्पर्यम् । इति संस्कृतयुक्तप्राकृतोदाहरणम् ॥

इति संस्कृतप्राकृतजातिः ।

प्रायो बिभ्यति कीदृशाद्रिगजाद्दन्तप्रहीना गजाः
पृथ्वी संप्रति कीदृशी नृपतिना राजन्वती राजते ।
प्रायः प्रावृषि कीदृशी गिरितटी धत्ते च कः कण्ठले
मज्झण्हे चलिए घणूअशदिणे जादं सरो केरिसं ॥ ५२ ॥

**सरदादवताविद्बाहिरं** ॥ सरदात् रदाभ्यां दन्ताभ्यां सहवर्तमानः सरदस्तस्मात् निर्दन्तेन गजेन सदन्तहस्तिना सह योद्धुमशक्यमिति भावः । अवता 'अव रक्ष पालने' अवतीत्यवनः तेन अवता रक्षता । विदवा विगतो दवो वनवह्निर्यस्यां सा । अहिः शेषनागः । अं विष्णुं । अग्रे अपभ्रंशभाषया मज्झण्हे इत्यादि । अस्य संस्कृतम्—मध्याह्ने चलिते घनात्ययदिने जातं सरः कीदृशम् । उत्तरम्—सरदादवताविदबाहिरं । शरदातपतापितं बाह्यं । शरद आतपेन तापितं बाह्यं बहिर्भागो यस्य तत् ॥

कृत्तं कीदृशमङ्गं दन्तभमं कं वदन्ति विद्वांसः ।
अतिलघुवाचि पदं किं केरिसु सुयणेसु होइ जणो ॥ ५३ ॥

**विस्रंतमणु** ॥ विस्रं 'पूतिगन्धस्तु दुर्गन्धो विस्रं स्यादामगन्धि यत्' इत्यमरः । पूतिगन्धमदित्यर्थः । तं तकारं 'लृतुलसानां दन्ताः' इति वचनात्तकारो दन्त्यः । अणु स्तोकं वा । अणुः परमाणुः । अग्रे चतुर्थपादेऽपभ्रंशभाषा । केरिसु इति । अस्य संस्कृतम्—कीदृशः स्वजनेषु भवति जनः । उत्तरम्—विस्रंतमणु विश्रान्तं विश्वस्तं मनो यस्यासौ । इति संस्कृतयुक्तापभ्रंशोदाहरणम् ॥

इति संस्कृतापभ्रंशजातिः ।

किं सुखमाहुः प्रायः केशविकारं च का हरेद्दयिता ।
कथमाभा कस्मिन्निशि को लुब्बइ वीलपुलिशाणं ॥ ५४ ॥

**शमलर्कमालंमे** ॥ शं सुखं अलकं 'अलकाश्चूर्णकुन्तलाः' इत्यमरः । मा लक्ष्मीः अलं अतिशयेन मे नक्षत्रे । अतःपरं मागधीभाषा—को लुब्बइ वीलपुलिशाणमिति । अस्य संस्कृतम्—को रोचते वीरपुरुषेभ्यः । उत्तरम्—शमलकंमालंमे समरकर्मारम्भः ।

समरस्य संग्रामस्य कर्म कार्यं तस्य आरम्भः । वीरपुरुषाणामिष्टो भवति । 'वीरपुरिषाणम्' इति चतुर्थ्यर्थे षष्ठी । मागधीभाषायां सकारस्य शकारः । तथा रेफस्य लकार इति भावः ॥

कः स्तम्बेरमसुत इति विख्यातः पृच्छति स्फुटं हरिणः ।
अहिणवणयलीलओ असाहुणो केन उज्झुडइ ॥ ५५ ॥

**कलभएण** ॥ हे एण हे मृग । कलभः हस्तिपुत्रः । 'द्वात्रिंशद्वार्षिको हस्ती कलभः' इति । अत्रोत्तरार्धे मागधीभाषा-अहिणवेति । अस्य संस्कृतम्—अभिनवनगरीलोकोऽसाधोः केन त्यजति ॥ उत्तरम्—कलभएण करस्य दण्डस्य भयेन राज्ञो दण्डभयेन । लोका उज्जडन्ति न पश्यन्तीत्यर्थः । इति संस्कृतयुक्तमागधीभाषोदाहरणं दर्शितम् ॥

इति संस्कृतमागधिकम् ।

कोपारुणं किमरुणाप्रसरस्य पूर्व-
काष्ठाग्रनिष्ठिततनोरुपमानपात्रम् ।
पत्तं खणेण मरणं सअरस्स रण्णं
पुत्तेहि किं पविसिउण्ण तुरंगमत्थं ॥ ५६ ॥

**कपिलपनं** ॥ कपिलपनं कपेर्मर्कटस्य लपनं मुखम् । कपिवदनमत्यारक्तं भवति । अग्रे पैशाची भाषा—पत्तमित्यादि । अस्य संस्कृतम्—प्राप्तं क्षणेन मरणं सगरस्य राज्ञः पुत्रैः प्रविशद्भिरिह किं च तुरङ्गमार्थम् । उत्तरम्—कपिलपनं कपिलनाम्न ऋषेर्वदनं तत्प्रति प्रवेशं कुर्वद्भिस्तैः तत्क्षणात् एव मरणं प्राप्तमित्यर्थः । कपिलपमित्यत्र पैशाच्यां वनशब्दस्य आदिवकारस्य पकारत्वेन श्रवणात् पनमिति स्यात् ॥

कं प्रीणयन्ति जलदाः सैन्यं कीदृक्पलायते समरात् ।
धत्ते शिरोधरा किं रुद्दशिरं केरिसं होइ ॥ ५७ ॥

**चातकंकातरंकं** ॥ चातकं बप्पीहं । कातरं भीरुं । कं मस्तकं । चतुर्थपादे पैशाची—रुद्देति । अस्य संस्कृतम्—रुद्रशिरः कीदृशं भवति । उत्तरम्—चातकंकातरंकं जातगंगातरंगं जाता उत्पन्नाः गङ्गायास्तरङ्गा लहर्यो यस्मिन् तत् । रुद्रस्य शिरसः सकाशादेव गङ्गा निःसरति । अत्र पैशाच्यां जकारस्थाने चकारः गकारस्थाने ककारो दर्शितः । इति संस्कृतयुक्तपैशाचीभाषोदाहरणं दर्शितम् ॥

इति संस्कृतपैशाचिकम् ।

को वर्णाद्यः क जलधिसुता कं च दीर्घादिसंज्ञं
प्राहुर्बुद्धाः कमजयदसौ तार्किकैः के क्रियन्ते ।
आमन्त्र्यो विः कथय विदितं किं पदं हेतुवाचि
जा णव्वी ए इमइ महिसा सावि बोल्लेइ कीसे ॥ ५८ ॥

**अएचम्मारंवादावेहि** ॥ अः अकारः मात्रिकायां द्विपञ्चाशद्वर्णेषु स्वराणां मध्ये प्रथमोऽकारः स्वर एवास्ति । यथा अइउण्, ऋलृक्, इत्यादिषु पाठः । ए अः शब्दः कृष्णवाचकस्तस्मिन् ए कृष्णे । चं चकारं । मारं कंदर्पं । प्रायो जिनेनैव कंदर्पो जितः । जिनस्य सर्वथापि स्त्रीसङ्गो नास्ति । अत एवेदमुक्तम् । वादाः अन्योन्यं

संस्कृतजल्पनादिशास्त्रकलहाः । हे वे हे पक्षिन् । यतोऽर्थः अतोग्रे लौकिकभाषा—जाणचीए इति । अल्यार्थः जाया महिला स्त्री हि णची नर्तयितुं ए एस्य इमाइ आयाति सावि अपि निश्चितं कीसे कीदृक् बोल्लेइ जल्पति । उत्तरम् अएचम्मारं-वदावेहि । अए इति आमन्त्रणे । चम्मारं ढोलम् । वादावेहि वादय । अस्य संस्कृतम्—अये मृदङ्गं वादय । अहं नर्तयामि । त्वं वाद्यं वादयेति जल्पन्ती आगच्छेत् ॥

शब्दः कः स्यात्पुरुषवचनं कुण्डलौ कौ स्मरारेः
कामाम्भोधेर्हरिरुदहरद्वीवधः पृच्छतीदम् ।
हांडी कुण्डी अणिसि नरडा कीस अह्मार एत्थं
जो पुच्छिल्ला स पुण परिहारुत्तरं कीस देइ ॥ ५९ ॥

नाहीकुंभार ॥ ना पुमान् । अही सर्पौ । कुं पृथ्वी । हे भार । अग्रे लौकिक-भाषा—हांडी कुंडी इत्यादि । नरडा इति नरसंबोधनम् । अ ह्मार । एत्थमस्मदर्थी । हांडीकुंडी लोकभाषा । हंडिकाः भाण्डानि कुंडिकाः कुण्डानि । कीस कथम् । अणिसि नानयसि इत्येवं जो पुच्छिल्ला यः पृच्छेत् । तस्य स पुण सः श्रोता तं पुनः परि-हारुत्तरं प्रत्युत्तरं कीस देइ कीदृक् ददाति । अस्या एकीभूतं संस्कृतम् । हे नर, अस्म-दर्थं हंडिकाः कुंडिकाः कथंचन आनयसि एवं यः पृच्छेत् तस्य सः श्रोता तं प्रति पुनः प्रत्युत्तरं कीदृक् ददाति । उत्तरम्—नाही कुंभार नास्ति कुंभारः कुंभकारं विना भाण्डानि कुत आनयामीत्युत्तरं दीयते । इति संस्कृतयुक्तलौकिकभाषोदाहरणं दर्शितम् ॥

इति संस्कृतलौकिकं । इति चित्रजातिः ।

एकभाषायाः संशुद्धं प्रश्नोत्तरम्—

को निवसइ सच्छंदं सुंदर गिरिगहणकुंजमज्झम्मि ।
सह अज्जुणेण जोज्झुं शिहिगमणो केरिसो होइ ॥ ६० ॥

सरभससवराहवग्गो ॥ अथ शुद्धप्राकृतम्—को निवसइ इति । व्याख्या—हे सुन्दर सुभग, गिरेर्गहने पर्वतस्य कठिने कुञ्जमध्ये स्वच्छन्दं स्वेच्छया को निव-सति । उत्तरम्—समग्रेण । सरभससवराहवग्गो शरभा अष्टापदाः, शशाः प्रसिद्धाः, वराहाः सूकराः, तेषां वर्गः समूहः । कुञ्जे निलीनस्तिष्ठति । 'निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे' इत्यमरः । तथा सह अज्जुणेणेति । शिखी मयूरो गमनं यस्य सः शिखिगमनः कार्तिकेयोऽर्जुनेन सह योद्धुं युद्धं कर्तुं कीदृशो भवति । उत्तरम्—तैरेवाक्षरैः । सरभसाः वेगवन्तः ईदृशाः ये शबराः भिल्लास्तैः सार्धं आहवे संग्रामे गच्छतीति आहवग्गः आहवाग्र्योगामी वा ॥

का हरइ मणं पइणो गुणगणजुव्वणशलाहणिज्जुस्स ।
कयचडचडत्ति सद्दा हूयासा केरिसा हुंति ॥ ६१ ॥

वरिसवहुया ॥ का हरइ इति । गुणानां गणेन समूहेन यौवनेन च श्लाघ्यस्य च पुनरार्यस्य श्रेष्ठकुले जातस्य । आर्यपुत्रस्येत्यर्थः । ईदृशस्य पइणो पत्युर्मनः का

हरति । उत्तरम्—सरिसवहुया सदृशी समानवयोगुणा वधुका स्नुषा भर्तुर्मनो हरतीति भावार्थः । तथा कयचड इति । कुतः चटचटदिति शब्दो यैस्ते हुता अग्नयः कीदृशा भवन्ति । उत्तरम्—तैरेवाक्षरैर्भिन्नार्थेन । सरिसवहुया सर्षपैर्हुताः । सिद्धार्थैर्हुतो हुताशनश्चटचटायते चटचटशब्दं कुरुते ॥

इति शुद्धप्राकृतम् ।

पाणिग्गहणणियंसणु सोहइ कहिं मंडिउं ।
साहसवदुवि वीर पइरिपुबलं केहिं खंडिउं ॥ ६२ ॥

**समरंगणेहिं** ॥ अथ शुद्धापभ्रंशी भाषा दृश्यते—पाणिग्गहणेति । पाणिग्रहणस्य विवाहस्य निवसनं वस्त्रं कैर्मण्डितं शोभितम् । उत्तरम्—समानरङ्गकरणैः तुल्यरङ्गप्रदानेन । तथा हे वीर साहसवदुवि साहसेन युक्तमपि प्रतिरिपुबलं सैन्यं कैः कृत्वा खण्डितं छेदितम् । त्वयेति शेषः । उत्तरं तदेव । समरंगणेहिं संग्रामाङ्गणैः मया वैरिबलं भग्नमिति भावार्थः ॥

रसिअह केण उच्चाडण किज्जइ
जुयइह माणसु केण उविज्जइ ।
तिसिय लोउ खणि केण सुहिज्जइ
एह पहो मह भुवणे विज्जइ ॥ ६३ ॥

**नीरसराएण** ॥ रसिअह केण इति । रसिकानां शृङ्गारादिनवरसविज्ञानाम् । अथवा श्रीरागादिषट्त्रिंशद्रागरसविज्ञानाम् । केनोच्चाटनुद्विग्नचित्तता क्रियते । उत्तरम्—नीरसराएण नीरसश्चासौ रागश्च नीरसरागस्तेन । दुःस्वरेण रसिका उद्विजन्ति उद्वेगं प्राप्नुवन्तीत्यर्थः । तथा युवत्याः नवयौवनायाः स्त्रिया मानसं चित्तं केनोद्विज्यते । उत्तरम्— नीरसरागेण नीरसेन शृङ्गारादिरसरहितेन यो रागः संबन्धस्तेन । अथवा निर्गतो रसो बलं पुरुषार्थत्वं वा नीरसो वृद्धः तस्य रागेण । युवत्यै तु वृद्धो न रोचते । तथा तृषितो लोकः क्षणं क्षणमात्रं स्तोककालं केन सुखी क्रियते । उत्तरम्—नीरशरावेण नीरस्य जलस्य शरावः पात्रं कोषिका तेन । कोषिकाप्रमाणमपि जलं तृषितस्य क्षणं सुखयति । तथा एहपहेति । एतदयं मम प्रश्नः भुवने केन गीयते । जगत्त्रितयमध्ये गीयत इत्यर्थः । उत्तरम्—नीरसरागेण नितरां रसो नीरसः, विशेषेण रसयुक्तो रागः सौकण्ठ्यं यत्रासौ नीरसरागस्तेन । अतिसुकण्ठरागेण मम गृहे गीयत इत्यर्थः । एवमस्यार्थचतुष्टयं ज्ञायते ॥

इति शुद्धापभ्रंशम् ।

सुयलो मेहं पुच्छइ मेहो विअ तं तहा सुयलं ।
केण हया सयलसुया केण जणो विसइ पायालं ॥ ६४ ॥

**बलाहककविलेण** ॥ अथ शुद्धमागधीभाषामाह—सुयलो मेहमित्यादि । शूकरो मेघं पृच्छति । तथा मेघोऽपि तं शूकरं पृच्छति । उभयोः प्रश्नमाह—समरसुताः नगरपक्षवर्तिनः पुत्राः केन हता इति शूकरेण मेघः पृष्टः । मेघः कथयति उत्तरम् ।

बलाह कविलेण हे वराह हे शूकर, कपिलेन ऋषिणा । तथा मेघः शूकरं पृच्छति—केण जणो विसइ पायालं जनो लोकः पातालमधोलोकं केन विशति । शूकरः कथयति । उत्तरम्—हे बलाहक हे मेघ, बिलेन भूमिद्वारेण । भूमिद्वारेण पाताललोके प्रविश्यते ॥

धवलुज्जलेहिं केहिं सोहइ धरणी मसाणदेसस्स ।
नरयस्स रक्खाइं नाकहिं समप्पतिनिहितं कताइपि ॥ ६५ ॥

नलकलंकेहिं ॥ धवलुज्जलेहिमिति । स्मशानदेशस्य धरणी पृथ्वी धवलोज्ज्वलैः कैः शोभते । उत्तरम्—नलकलंकेहिं नराणां मनुष्याणां करंकैरस्थिपञ्जरैः । अत्र रकारस्थाने लकारः । तथा नरकस्य रक्षपालाः कैः परिवेष्टिता भवन्ति । तैरेवाक्षरैः नरकस्य रंकैर्वराकैः ॥

इति शुद्धमागधिकम् ।

वेरी पुच्छदि ककने रायति कसनो घनो कहिंख ।
कच्चाइं ना कहिं समप्पति निहितं कताइं पि ॥ ६६ ॥

अहितपक्खेहिं ॥ अथ शुद्धपैशाची भाषोच्यते—वेरी पुच्छदि इत्यादि । वैरी पृच्छति कृष्णः श्यामो घनो मेघो गगने आकाशे कैः कृत्वा राजति इति पृष्टे उत्तरम्—अहितपक्खेहिं हे अहित हे शत्रो, पक्खेहिं पक्षीहिंति । संस्कृतं पक्षिभिरिति । बलाकाप्रभृतिपक्षिभिः शोभते । तथा कच्चाइं इति निहितं निश्चितं कृतान्यपि कृत्यानि कार्याणि कैर्न समाप्यन्ते । अयं भावार्थः—संजातमपि कार्यं कैर्भङ्गमापद्यते न समाप्यते समाप्तभावं नापद्यते । अत्रोत्तरम्—तदेव । अहितपक्षिभिः शत्रुपक्षीयैरेवार्थाः भज्यन्ते ॥

पत्तून किं फटचनो निचतेहताना
अत्थासनं फचति चंफनिसूतनस्स ।
भोत्तून खोरतरतुक्खसताइ पावा
मोहान्धकारगहनं लप किं लफन्ति ॥ ६७ ॥

विसमरणं ॥ पत्तून किमित्यादि वसन्ततिलकाच्छन्दः । अस्य भाषाश्लोकस्य संस्कृतश्लोको लिख्यते—प्राप्याथ किं भटजनो निजदेहदानादर्धासनं भजति जम्भनिषूदनस्य । भुक्त्वा च घोरतरदुःखशतानि पापा मोहान्धकारगहनं वद किं लभन्ते ॥ भाषा—श्लोकस्य व्याख्या—फटचनो भटजनः निचतेहताना निजस्यात्मनो देहस्य दानात् किं पत्तून किं प्राप्य चंफनिसूतनस्स जम्भनिषूदनस्य इन्द्रस्य अत्थासनं अर्धासनं फचति भजति इत्येवं शब्दार्थः । उत्तरम्—विसमरणम् । विषमं च तत् रणं संग्रामश्च विषमरणं तत् विषमरणम् । रणशब्दो नपुंसकलिङ्गेऽप्युक्तः । कठिनसंग्रामं प्राप्य योद्धा इन्द्रस्यार्धासनं सेवते । संग्रामे देहदानात् स्वर्गप्राप्तिरिति पौराणिका वदन्ति । तथा पावा पापाः । खोरतरतुक्खसताइ घोरतरदुःखशतानि भोत्तून भुक्त्वा मोहान्धकारगहनं मोहो अज्ञानमेवान्धकारस्तेन गहनं निबिडं किं फलन्ति किं प्राप्नुवन्ति । हे

विद्वन्, त्वं लप वद । अयमर्थः—पापिनो घोरं दुःखं भुक्त्वा अन्ते किं फलं लभन्ते । उत्तरम् । विसमरणं विषेण मरणं नाशं विषमरणम् । पापिनोऽन्ते विषं भुक्त्वा म्रियन्तेऽयमभिप्रायः ॥

इति शुद्धपैशाचिकम् ।

जा नीयाणइ निंदे भिंभला सा किसि वुच्चइ बोल्ल रे संभलि ।
जो तिलसरिसव पीडइ जाण किसि भणिज्जइ सोवि नाणी ॥६८॥

सुतेल्ली ॥ अथ शुद्धलौकिकभाषामाह—जा नीयाणइ इत्यादि । या स्त्री निद्रया भिंभला व्याकुला किंचित् नीयाणइ न जानाति संभलि हे सखि । इति श्रुत्वा प्रश्नोत्तरत्वं बोल्ल रे वद । सा किसि वुचइ सा कीदृशी उच्यते । उत्तरम् । सुतेल्ली सा सुप्तोत्थिता उच्यते । तथा जो तिलसरिसव यो ज्ञात्वा तिलांश्च सर्षपांश्च पीडयति घाणियन्त्रेण तैलादि निष्कासयति सोवि नाणी सोऽपि ज्ञानी शिल्पिकः कीदृक् भण्यते उच्यते । अत्राप्युत्तरम्–सुतेल्ली । 'धूसरश्चाक्रिकस्तेली' इति वचनात् । लोके 'घांची-तेली' इति नाम प्रसिद्धम् ॥

इति शुद्धलौकिकम् ।
इति संशुद्धजातिः ॥

एतावतापि दिङ्मात्रं प्रश्नानां दर्शितं मया ।
येन येन हि माद्यन्ति तद्विदस्तत्तदूह्यताम् ॥ ६९ ॥

इति तृतीयः परिच्छेदः ।



## चतुर्थः परिच्छेदः ।

व्यक्तीकृत्य कमप्यर्थं स्वरूपार्थस्य गोपनात् ।
यत्र बाह्यान्तरावर्थौ कथ्येते ताः प्रहेलिकाः ॥ १ ॥

प्रहेलिकानाम पृष्टम् ।

सा द्विधार्थी च शाब्दी च विख्याता प्रश्नशासने ।
आर्थी स्यादर्थविज्ञानाच्छाब्दी शब्दविभागतः ॥ २ ॥

तरुण्यालिङ्गितः कण्ठे नितम्बस्थलमाश्रितः ।
गुरूणां सन्निधानेऽपि कः कूजति मुहुर्मुहुः ॥ ३ ॥

**पानीयकुम्भः** ॥ सा द्विधा आर्थी शाब्दी च । द्विप्रकाराया उदाहरणम् । श्लोकोक्तविशेषणैरुपेतः सः कः स्यात् हे विद्वन्, त्वं ब्रूहि किमुत्तरं दातव्यं विचार्यतामिति । एवं विशेषणानां भावे विचार्यमाणे ईदृशो युक्त्या भर्ता ज्ञायते । भर्तापि तरुण्या सोत्कण्ठमालिङ्ग्यते । तथा कान्ताप्रियो भर्ता उभयथापि नितम्बस्थाने गुह्यप्रदेशे तिष्ठेत् । तथा च गुरूणां मातृपितृश्वश्रूश्वशुरजनानामग्रेऽपि स्त्रियं कामयते । इत्येवमभिप्रायेण बाह्योऽर्थः । आभ्यन्तरस्तु पानीयकुम्भः । सोऽपि कूपसरोवरादौ जलेन भृत्वा शिरस्यारोपणसमये तरुण्या हस्ताभ्यामालिङ्ग्यते । प्राणादपि कान्तः प्रियः कक्षानितम्बस्थाने च गृह्यते । गुरूणां वृद्धघटानामुपर्युपविश्य कूजति बडबडायते अतो घट एवायं निश्चयीकृतः इत्येवमान्तरार्थः केनापि न ज्ञायते । एवमर्थस्य द्वैविध्यं दर्शितम् ॥

आपाण्डु पीनकठिनं वर्तुलं सुमनोहरम् ।
करैराकृष्यतेऽत्यर्थं किं वृद्धैरपि सस्पृहम् ॥ ४ ॥

**पक्वबिल्वफलम्** ॥ यत् श्लोकेनोक्तं तत् किं । हे श्रोतः, त्वं ब्रूहि । उत्तरम्—प्रकटभावेन स्त्रियाः कुचयुगलमिति ज्ञायते । आन्तरार्थस्तु पक्वबिल्वफलमिति । इति बाह्यान्तरार्थयोर्भेदेन आर्थी प्रहेलिका ॥

इत्यार्थी जातिः ।

दुर्वारवीर्य सदपि त्वयि का प्रसुप्ता
श्यामा सपत्नहृदये सुपयोधरा च ।
तुष्टे पुनः प्रणतशत्रुसरोजसूर्ये
सैवाद्यवर्णरहिता वद नाम का स्यात् ॥ ५ ॥

**शस्त्री** ॥ शस्त्री लोहस्य छुरिका श्यामवर्णा लोहमयत्वात् । सुष्ठु पयो जलं भरति सा । लोहेषु पानीयं दीयते । पुनः सा एव शस्त्री आद्यवर्णेन शकारेण रहिता सती स्त्री इति तिष्ठति । कीदृशी स्त्री । श्यामा षोडशवार्षिकी । सुपयोधरा सुष्ठु पयोधरौ स्तनौ यस्याः सा । ईदृशी स्त्री त्वयि तुष्टे सति शत्रूणां हृदयोपरि खेलते शेते वा । इत्येवंशब्दस्य विभङ्गादक्षरस्य लोपात् द्वावर्थौ कृतौ । अत एव शाब्दी प्रहेलिका ॥

सदारिमध्यापि न वैरियुक्ता नितान्तरक्तापि सितैव नित्यम् ।
यथोक्तवादिन्यपि नैव दूतिका का नाम कान्तेति निवेदयाशु ॥६॥

**सारिका** ॥ पुनरन्यप्रकारेण शब्दभाजनां दर्शयति—सदारिमध्येति । व्याख्या—हे कान्त हे प्रिय भर्तः, त्वं आशु शीघ्रं इति पूर्वोक्तं निवेदय कथय । सा का नाम स्यात् । या सदा सर्वदा अरीणां मध्ये स्थितापि वैरिभिर्युक्ता न शत्रुभिर्युक्ता न विद्यते । 'न वैरयुक्ता' इति पाठे वैरेण विरोधेन युक्ता नास्ति । एवं विरोधाभासः । उत्तरम्–सारिका । अत्रैवं विरोधपरिहारेऽर्थो विधेयः । शारिका इति शब्दमध्ये अरिशब्दः वारिकारो वर्तते । परं कैश्चित्सार्धं वैरं नास्ति । पुनश्च या नितान्तं अतिशयेन रक्ता रक्तवर्णापि नित्यं सिता श्वेतैव सा सिता कथमुच्यते । अत्रापि विरोधः । अत्रापि विरोधपरिहारेऽयमर्थो विधेयः । रकारककारयुक्तापि सितैव सकारेण इता युक्ता सिता । सारिका इत्यत्र सकाररकारककारवर्णाः सन्ति । कान्ता इति श्लोके कृते कान्तो यस्याः सा कान्ता । सारिका इति शब्दे अन्ते का इति वर्णो विद्यते । कान्ता कामनीया मनोहरा वा इत्येवं विशेषणत्रयोपेते सति सारिका इति शब्दः । 'रमवानी सोंगटी' इति भाषा घटते । कथम् । अरीणां रमणवतां मध्ये स्थितापि कैश्चित्सार्धं वैरं नास्ति । परं सा उपरिभागे रक्ता अधोभागे श्वेता परं कान्ता सुन्दरा इति । तथा यथोक्तवादिन्यपि दूती नैव भवति यथा उच्यते तथा वदति । परं दूती सा न । अत्रापि विरोधः । दूतीधर्मस्त्वीदृश एवं सारिका तु पाठ्यमाना यथोक्तं पठति परं दूती न भवति । एषा सारिका कथ्यते । पोपटी काबरी इति भाषा । इयमपि शाब्दी प्रहेलिका ॥

### इति शाब्दी जातिः ।

नीरस उण बहुगुणवंतउ भमइ निरंतर निश्चल हुंतु ।
तरुगिगिज्जिणउ पलुपत्रुतसु जो परिजाणइ पविसोजगिजसु ॥७॥

**गुणवृक्**ः ॥ अथ लौकिकभाषया शाब्दीं प्रहेलिकां दर्शयति— नीरस इति । व्याख्या—नीरसः कः पुनर्बहुगुणवान् वर्तते । यो नीरसः सः गुणवान् कथमिति विरोधः । उत्तरम्–गुणवृक्ः । 'गुणवृक्षस्तु कूपकः' गुणैर्दवरकैर्बद्धो वृक्षो गुणवृक्षः । प्रसिद्धभाषया 'वहाणनो कुवाथंभ' सः च नीरे जले शेतेऽसौ नीरशयः । वा निर्गतः रसो यस्मात् सः नीरसकः । अतिशुष्कत्वात् बहुभिर्गुणैर्दवरकैर्बध्यते । अतो बहुगुणवान् । तथा भमइ निरंतरं नित्यं भ्रमति परं निश्चलः सन् तिष्ठति । यश्चलन् सः निश्चलः कथं भवेदिति विरोधः । अत्रापि वाहनेन भ्रममाणेन सार्धं भ्रमति । आत्मना त्वेकत्रैव तिष्ठति । तथा तरुर्वृक्ष इति गीयते कथ्यते परं फलपत्रे न स्तः गुणवृक्ष इत्युच्यते फलं च पत्रं च न भवति । जो परिजाणइ यो नरोऽस्यार्थस्य परीक्षां स्वभावं जानाति स पुमान् बहुयशः प्राप्नोति इत्यक्षरार्थः ॥

घरि घरि चल्लिइ सयलपियारी जीवंती वेरयरी साहो नारी ।
खणि बन्भइ खणि भुंचि खणि एकली तह जाणसु वेह जाइ नी पिछी ८

**पाशासारी** ॥ घरिघरि इति । व्याख्या—गृहे गृहे व्रजति प्रतिगृहं याति परं सकलजनप्रिया सा नारी जीवति यदा तदा वैरकरी विरोधकारिणी भवेदिति शेषः । क्षणेन बध्यते क्षणेन मुच्यते तथा जानीथ यूयं यथा क्षणेन एकाकिनी प्रेरिता सती नो याति । उत्तरम्—पाशासारी पाशकसारिका बन्धनदवरकेण युक्ता पोपटी काबरिया भाषा । अथवा रमावाना पाशासहित सोंगटी इति भाषा । सा च पाशासारी गृहे गृहे काष्ठादौ व्रजति । यत्रैव याति तत्रैव प्रिया । सा च यावज्जीवति तावत् क्रीडाकर्तुर्वैरकरी दुःखदायका म्रियमाणा सुखाय स्यात् । क्षणेन बध्यते चलितुं न शक्नोति क्षणेन मुच्यते चलति एतद्रीत्यार्थद्वयं जातम् । इति शाब्दी लौकिकभाषा ॥

इति प्रहेलिकाजातिः ।

कालसारादिकं हृद्यमजमारादि गूढकम् ।
विदग्धो दुर्विग्धानां कुरुते दर्पशान्तये ॥ ९ ॥

कालश्च सारश्च कालसारौ तौ आदी यस्य तत्कालसारादिकं हृदि भवं हृद्यं नाम पृष्टम् ॥

अनुनेतुं मानिन्या दयितश्चरणे सरागचरणायाः ।
यावत्पतितः स तया तत्क्षणमवतारितः कस्मात् ॥ १० ॥

**कालहृद्यं** ॥ कालो रजस्वलत्वादिदिनं अवगम्यते । अस्यायं भावः—कालस्य च सारस्य च ज्ञानं हृदये स्थाप्यते पश्चात्पृच्छयते । अतएव हृद्यमिति पण्डितैरपि दुःखेनावबुध्यते ईदृशया श्लोकोक्तयानया स्त्रिया यो दयितो दूरीकृतः । सः कस्मात्केन हेतुना । हे विद्वन्, त्वं ब्रूहि इति पृष्टम् । अत्र हेतुर्वक्तुर्हृदयस्थोऽप्यनुक्तेन ज्ञायते धीमद्भिरपि अतएव हृद्यम् । अत्र हेतुमाह—रजस्वलत्वात् स्त्रीधर्मत्वात् । अहमस्पृश्यास्मीति मां मा स्पृशेति विज्ञायावज्ञातो निजदयितहृद्यो भावः श्लोकमध्येन भवति रजस्वलाकालो हृद्य इति ॥

अवलोक्य स्तनौ वध्वा गुञ्जाफलविभूषणौ ।
निःश्वस्य रोदितुं लग्ना कुतो व्याधकुटुम्बिनी ॥ ११ ॥

**सारहृद्यं** ॥ एतच्च रोदनं तया कुतः कृतमिति प्रष्टव्यम् । हृद्योऽयं भावः गजादिवधे समर्थोऽयं मुक्ताफलानां हारं परिधापयेदिति पुत्रस्य गजादिवधेऽसमर्थत्वं विज्ञाय तया कुटुम्बिन्या वधूकुचावालोक्य निःश्वस्य च रुदितम् क्षीणबलत्वेन निजपुत्रस्यासमर्थत्वं विचारितम् । स्तनयोरारक्तत्वेन वध्वाः नवयौवनत्वं चिन्तितमित्याकूतम् । पुत्रस्य असारतो रोदनहेतुः । स तु हृद्यः प्रष्टुर्हृदयस्थः कथनं विना न ज्ञायते । इति सारहृद्यम् ॥

इति कालसारजातिः ।

दरदिट्ठचूयमउलं पिच्छिय सहि याहि विरहिणी सहियम् ।
नमिउं कंकेल्लितरू चूउं चरणाहदो कत्तो ॥ १२ ॥

**रागद्वेषहृद्यं** ॥ लौकिकभाषया अन्यदपि हृद्यमेव दर्शयति—दरदिट्ठेति । व्याख्या

चूतस्याम्रस्य मुकुलं पुष्पोद्गमं ईषत् दृष्ट्वा काचित्सखी विरहिणी सती सख्याः संमुखं पश्यति । सखीं प्रति दर्शयित्वा कंकेलितरुरशोकवृक्षः शिरसा प्रणतः । चूतश्चरणेनाहतः । तत्कुतः इति वो विचारणीयः भावोऽयं गूढः । अत्र भावः श्लोकमध्ये लिखितो नास्ति । किंतु हृदि वर्तते । स चायम् । आम्रे मुकुलदर्शनाद्विरहिण्या विरहो दीपितः । ततो दुःखं कृत्वा आम्रस्तया चरणेन हतः । तथा कंकेलितरुरप्रफुल्लितत्वात्स्वसदृशः प्रणतोऽयं हेतुर्ज्ञायते । यस्याः भाषार्यायां अर्थान्तरं लिख्यते । ईषत् दृष्ट्वा चूतमुकुलं विरहिणीं सखीं प्रेक्ष्य सखीभिरशोकवृक्षो नमितः । चूतः पादाहतः । तत्कस्माद्धेतोः । अशोके पुष्पिते सति सख्या प्रियः समेष्यति । अतः कारणात्प्रणतः । चूतदर्शने सति अस्याः स्मरकष्टं जातमिति कारणात् हतः । इति रागद्वेषहृद्यम् ॥

पिच्छन्तमणिमिसच्छं पिच्छिय वहूकया झत्ति भिक्खयरं ।
दंसिय कयाइं सीसे कत्तो दो जाइकुसुमाइं ॥ १३ ॥

अन्यच्च हृद्यं कथयति लौकिकभाषया—पिच्छन्तमित्यादि । व्याख्या—कयाचिद्वधूकया अनिमिषाक्षं निमेषरहितनेत्रं ईदृशं प्रेक्षन्तं विलोकयन्तं कंचन भिक्षाचरं भिक्षुकं पिच्छिय दृष्ट्वा झटिति शीघ्रं तया द्वे संख्ये जातीकुसुमे जपापुष्पे तं भिक्षुकं दर्शयित्वा स्वशीर्षे कृते मस्तके धृत्वा तस्मै दर्शिते । कत्तो तत्कुतः कस्माद्धेतोरित्युच्यतामिति प्रष्टव्यम् । अत्राप्येवं हृद्यम् । भिक्षाचरेण सा मया सस्नेहं विलोकिता तया तु जातीकुसुमयोरुच्चस्थाने धारणेन निजजातिरेतत्कुसुमवदुज्ज्वला । उभयपक्षविशुद्धास्म्यहं त्वद्योग्या नासीत्युत्तरं दत्तम् । अकार्यं नैव कर्तव्यम् । अयं भावोऽस्ति ॥

इति कालसारादिहृद्यजातिः ।

रविसुतकृतगोकर्णः श्रुतिविषयगुणाम्बरो वनात्मधरः ।
नरकशिरा जगदखिलं चिरमव्यादसमरुक्पाणिः ॥ १४ ॥

अजगूढकम् ॥ अजमारादिगूढकम् । अजश्च मारश्चाजमारौ तौ आदी येषां तेऽजमारादयः पदपादार्थाः ते एव गूढाः गुप्ताः यस्मिन् तत् अजमारादिगूढकम् । अस्यायं भावः—अजः शंभुस्तद्वाचीशब्दो गूढो यस्मिन् तत् अजगूढम् । मारः कामः स एव गूढो यस्मिन् तत् मारगूढम् । विभक्त्यन्तं पदं तदेव गूढं यस्मिन् तत्पदगूढं । श्लोकस्य चतुर्थो भागः पादः स एव गूढो यस्मिन् तत्पादगूढम् । अर्थः शब्दार्थः स एव गूढो यस्मिन् तत् अर्थगूढम् । इति पञ्च पृष्टानां उदाहरणानि वक्ष्यति । असमरुक्पाणिः । न समोऽसमो विषमः स चासौ रुक्चासमरुक् शूलरोगः । त्रिशूलमित्यायुधविशेषः । सः पाणौ हस्ते यस्य सः शूलपाणिर्महादेवः । एवमेतन्नामगुप्तं ज्ञापितम् । त्रिपादोक्तैर्गूढार्थविशेषणैरजो महादेवो वर्णितः । इति अजगूढकम् ॥

इयमेका जातिः ।

कुभ्रेनसुग्रीनयनाश्रयाशदग्धोन्मदा दर्दुरहर्षकाले ।
स्वजन्मभक्ष्यप्रियभोजनाशा नृत्यन्ति भीमानुजगोजभाजः ॥१५॥

अत्र विशेष्यपदं गूढम् स्वजन्मभक्षप्रियभोजनाशाः इति, विशेष्यपदं स्वस्माज्जन्म येषां तानि स्वजन्मानि स्वापत्यानि तानि भक्षयन्ति ते स्वजन्मभक्षाः सर्पास्ते एव प्रियाः भोजनस्य आशाः येषां ते ईदृशाः मयूराः इति मयूरनामगोपितम् । दर्दुर-हर्षकाले दुर्दुराणां मण्डूकानां हर्षकालो वर्षाकालस्तस्मिन् इति वर्षानाम गोपितम् । किंभूताः मयूराः । कुं पृथ्वीं धरन्ति ते कुध्राः पर्वतास्तेषामिनः स्वामीः हिमाचल-स्तस्य भूः पुत्री पार्वती तां प्रीणातीति प्रीर्महादेवस्तस्य नयनस्य आश्रयाशो नेत्रव-ह्निस्तेन दग्धो यः कामस्तेन उन्मदा उन्मत्ताः । अत्र मारस्य नाम गोपितम् । इति मारगूढम् ॥

इयमप्येका जातिः ।

वाताच्छीतिररिध्रोऽरं वो हरतान्महासुरीदयितः ।
वीडाप्राव्यानीका वार्वाहाभोसमस्तानाः ॥ १६ ॥

अथ क्षेपकः श्लोकोऽयं ।

व्ययवासाः पश्चशिराः यरिर्वीनारिभूषणः ।
असिरोमा क्रियादुर्वः शङ्कालायनवीक्षणः ॥ १७ ॥

अत्र गूढार्थयोजना वर्तते । महासुरीदयित इत्यस्मात् ईदयित इति विशेष्यपद-गुप्तं धृतमस्ति । अत्र क्रियादुर्वे इत्यस्माद्वाक्यात् उरिति विशेष्यं गूढम् ॥ इति पदगूढम् ॥

पदगूढं ।

दयावान्प्रयतः शुद्धः प्रबुद्धः कमलेक्षणः ।
पापापहस्त्रिभुवनं बुद्धः पायादपायतः ॥ १८ ॥

अत्र बुद्धः पायात् इति चतुर्थः पादः पूर्वेषु त्रिषु पादेषु गुप्तोऽस्ति । कोऽर्थः— चतुर्थपादस्य वर्णाः प्रथमद्वितीयतृतीयपादेष्वन्तर्गोपिताः सन्ति । सम्यग्विचार्य विलोकितव्याः ॥

न मज्जति क्वचिद्दोषे प्रीणाति जगतो मनः ।
य एकः स परं श्रीमान् चिरं जयति सज्जनः ॥ १९ ॥

अत्रापि चतुर्थः पादो गूढः चिरं जयति सज्जन इति पाश्चात्यत्रिषु पादेषु गोपितोऽस्तीति विचार्य सद्भिर्द्रष्टव्यः ॥ इति पादगूढम् ॥

पादगूढं । इयमप्येका जातिः ।

दृष्टो मया सखि ब्रूहि रोदयित्वा गतोऽद्य माम् ।
भद्रे कल्याणिनी भूयाः प्राचीं पश्य विनिर्मलाम् ॥ २० ॥

अत्र भावः कः । यथेयं प्राची निजभर्तुः सूर्यस्य विरहेण रात्रौ दुःखितापि अधुना सूर्योदये विकसिता सशोभा जाता तथा त्वमपि भर्तुरागमे विलासं प्राप्स्यसीति भावः सख्या ज्ञापितः ॥

दाहिणपवणुव्विग्गा सम्मीलइ लोयणाइं पहियवहू ।
निउणसही उण तीए कण्णविवरेहिं ढक्केहि ॥ २१ ॥

दाहिण इति । व्याख्या—काचित्पथिकवधूर्दक्षिणपवनेनोद्विग्ना व्याकुलीकृता सती लोचने संमीलयति आच्छादयति । तदा च तस्या निपुणसखी प्रवीणवयस्या तस्याः पथिकनार्याः कर्णयोर्विवरे छिद्रे अङ्गुल्या ढक्कयति । मुद्रयतीत्यर्थः । तत्सख्या कर्णाच्छादनं कस्मात्कृतं इत्यर्थो गूढविचारणीयः । तच्चैवं तया दक्षिणपवनमसहमानया निजनेत्रे मुद्रिते । सख्या च विरहिणीत्वान्मा कदाचित्कर्णमार्गेणास्या जीवो व्रजेदित्यतस्तस्याः कर्णौ पिहिताविति भावः । अथ पाठान्तरम् । पथिकवधूर्लोचनानि संमीलयति । किंभूता । दक्षिणपवनोद्विग्ना निपुणसखी पुनस्तस्याः कण्ठमपि हस्तैश्छादयति । तत्कथम् । सा कण्ठगतप्राणा अहमेवं मन्ये । अन्यथास्याः कण्ठात्प्राणाः गमिष्यन्ति ॥

अर्थगूढं । इति गूढजातिः ।

स्तुतिनिन्दातदर्थत्वाद्व्यर्थमर्थद्वयोदयात् ।
निह्नवात्कथितस्यापि शब्दव्याजादपह्नुतिः ॥ २२ ॥

स्तुतिश्च निन्दा च स्तुतिनिन्दे । ते विद्येते यस्यां सा स्तुतिनिन्दाजातिः । द्वौ अर्थौ यस्मिन् तत् द्व्यर्थं प्रृष्टम् । कथितस्यार्थस्य शब्दकपटेन मिथ्याभाषणात् अपह्नुतिरिति नामजातिः । एषां त्रयाणामुदाहरणानि मूलग्रन्थे सरलानि भवन्ति ॥

बहुदोषो गुणध्वंसी गोहन्ता जनपीडकः ।
करोतु विरथो लोकमस्तमाप्तमहोदयम् ॥ २३ ॥

विष्णोः स्तुतिनिन्दे ।

सततमहितजनवत्सलबहुभयपापक्रियापरिभ्रष्टः ।
इह कलिकाले कुपतिर्जगतस्त्वं परमदुःखकरः ॥ २४ ॥

राज्ञः स्तुतिनिन्दे ।

इति स्तुतिनिन्दाजातिः ।

प्रसन्नवदनः श्रीमानयं लब्धमहोदयः ।
करप्रचारसुभगो राजा नन्दयति प्रजाः ॥ २५ ॥

चन्द्रभूपती ।

विनायकाहितप्रीतिर्देवो गङ्गां बभार यः ।
सर्वदोमाधवः स त्वामव्याद्व्यर्थविक्रमः ॥ २६ ॥

हरिहरौ ।

इति द्व्यर्थजातिः ।

सीत्कारं शिक्षयति व्रणयत्यधरं तनोति रोमाञ्चम् ।
किमु नागरिको मिलितो नहि नहि सखि हैमनः पवनः ॥२७॥

रुचिरस्वरवर्णपदा रसभाववती जगन्मनो हरति ।
तत्किं तरुणी नहि नहि वाणी बाणस्य मधुरशीलस्य ॥ २८ ॥

इति अपह्नुतिजातिः ।

स्वरेषु बिन्दुयुक्तेषु हलानां यदबोधनम् ।
तद्बिन्दुमदिति प्राहुः केचिद्बिन्दुमतीमिति ॥ २९ ॥

बिन्दुः अनुस्वारो विद्यते यस्मिन् तत् बिन्दुमत्पृष्टम् ॥

मानसीनाभसीत्याद्या बुद्ध्यादौ न्यासतो हि याः ।
बाहुल्येनाप्रयोगास्ता नेह तासां प्रदर्शनम् ॥ ३० ॥

ठिठठठठूठाठठुं ठिठुं ठिंठोः ठुठुठुठीठठिठः ।
ठठठुठठठि ठुठठाठुठठठुठीठठठोठठठुंठः ॥

त्रिनयनचूडारत्नं मित्रं सिन्धोः कुमुद्वतीदयितः ।
अयमुदयति घुसृणारुणतरुणीवदनोपमश्चन्द्रः ॥ ३१ ॥

किमुक्तं भवति । बिन्दुमज्जातेः प्रथमं श्लोकं विधाय पश्चाद्ये श्लोकस्य वर्णाः भवन्ति ते लुप्यन्ते तेषां स्थाने ठकाराः बिन्दवो वा क्रियन्ते । तत्रस्थाः स्वरास्तत्रैव स्थाप्यन्ते । एवमेषा बिन्दुमती भवति । परं हलानामभावान्न केनापि स श्लोको वाचयितुं शक्यते । अत्र त्रिनयनचूडारत्नमित्यस्य आर्यावृत्तस्य वर्णस्थाने ठकारा लिखिताः सन्ति । उपरिष्टाच्च स्वरा दत्ताः सन्ति । एतस्यैव श्लोकस्य रीत्या बिन्दुमती लेखनीया ॥

सखि विधुमध्यगतं किं तव वदनमुत गण्डशेखरस्याङ्कः ।
एतौ विलोकनात्परस्परं विस्मयं कुरुते दृश्यते च ॥ ३२ ॥

०ि ०िु००ूं०ं ०ि ०० ०००ु० ०ं०े००्ठां०ः ।
०ै०ौ ०ि०ो००ाठु०्ठं० ०्ठि०ं ०ु०ु०े ०्ठु०े ० ॥

इति बिन्दुमज्जातिः ।

सखि विधुमध्यगतं किमित्यार्यावृत्तस्य बिन्दून् लिखित्वा स्वरा देयाः ॥

क्रियादिकं स्थितं यत्र पदसंधानकौशलात् ।
स्फुटं न लभ्यते तच्च क्रियागुप्तादिकं यथा ॥ ३३ ॥

क्रिया इति क्रियापदं गुप्तं यस्मिन् तत् क्रियागुप्तं आदिर्येस्मिन् तत् क्रियागुप्तादिकम् । आदिशब्देन 'क्रियाकारकसंबन्धगुप्तान्यामन्त्रितस्य च गुप्तं । तथा समासस्य लिङ्गस्य वचनस्य च ॥' सुप्तिङ्रूपस्य द्वयस्य वचनस्य च कारकशब्दे 'कर्ता कर्म च करणं संप्रदानं तथैव । अपादानाधिकरणमित्याहुः कारकाणि षट्' ॥

राजन्नवघनश्यामनिस्त्रिंशाकर्षदुर्जयः ।
आकल्पं वसुधामेतां विद्विषो च रणे बहून् ॥ ३४ ॥

पुंस्कोकिलकुलस्यैते नितान्तमधुरारवैः ।
सहकारद्रुमा रम्या वसन्ते कामपि श्रियम् ॥ ३५ ॥

एतानि अष्ट पृष्टानां उदाहरणानि वक्ष्यन्तेऽनुक्रमेण–राजन्नवघनश्याम इत्यत्र अव, विद्विषो द्य रणे इत्यत्र द्य, नितान्तमधुरारवैरित्यत्र अधुः ॥

इति क्रियागुप्तजातिः ।

न करोति नाम रोषं न वदति परुषं न हन्त्ययं शत्रून् ।
रञ्जयति महीमखिलां तथापि धीरस्य वीरस्य ॥ ३६ ॥
शरदिन्दुकुन्दधवलं नगपतिनिलयं मनोहरं देवम् ।
यैः सुकृतं कृतमनिशं तेषामेव प्रसादयति ॥ ३७ ॥

अत्र धीरस्येति पदे धीः, मनोहरमित्यत्र मनः, इति कर्तृपदं गुप्तम् ॥

इति कर्तृगुप्तम् ।

सीत्करासारसंवाही सरोजवनमारुतः ।
प्रक्षोभयति पान्थस्त्रीनिःश्वासैरिव मांसलः ॥ ३८ ॥
सुभग तवाननपङ्कजदर्शनसंजातनिर्भरप्रीतेः ।
शमयति कुर्वन्दिवसः पुण्यवतः कस्य रमणीयः ॥ ३९ ॥

सरोजवनमारुत इत्यत्र सरः । शमयतीत्यत्र शमिति कर्मपदं भिन्नत्वेन ॥

इति कर्मगुप्तम् ।

पूतिपङ्कमयेऽत्यर्थं कासारे दुःखिता अमी ।
दुर्वारा मानसं हंसा गमिष्यन्ति घनागमे ॥ ४० ॥
अहं महानसा यातः कल्पितो नरकस्तव ।
मया मांसादिकं भुक्तं भीमं जानीहि मां बक ॥ ४१ ॥

दुष्टं वा जलं दुर्वाः तेन दुर्वारा कलुषितजलेन । महच्च तत् अनः शकटं च महानः तेन महानसा ॥

इति करणगुप्तम् ।

अम्भोरुहमये स्नात्वा वापीपयसि कामिनी ।
ददाति भक्तिसंपन्ना पुष्पसौभाग्यकाम्यया ॥ ४२ ॥
प्रशस्त्यायुक्तमार्गस्य तव संमानितां श्रिताः ।
स्पृहयन्ति न के नाम गुणरत्नालय प्रभो ॥ ४३ ॥

अम्भोरुहमये इत्यत्र अये । इः कामस्तस्मै अये चतुर्थी । प्रशस्त्यायुक्तमार्गस्येत्यत्र प्रशस्त्यै कल्याणाय उक्तमार्गस्य ॥

इति संप्रदानगुप्तम् ।

शिलीमुखैस्त्वया वीर दुर्वारैर्निर्जितो रिपुः ।
बिभेत्यत्यन्तमलिनो वनेऽपि कुसुमाकुले ॥ ४४ ॥

सरसीतोऽयमुद्धृत्य जनः कंदर्पकारकम् ।
पिबत्यम्भोजसुरभि स्वच्छमेकान्तशीतलम् ॥ ४५ ॥

अलिनो भ्रमरात् । सरसीतः सरोवरात् ॥

इत्यपादानगुप्तम् ।

या कटाक्षच्छटापातैः पवित्रयति मानवम् ।
एकान्ते रोपितप्रीतिरस्ति सा कमलालया ॥ ४६ ॥

विपद्यमानता सिद्धा सर्वस्यैव निरूष्मणः ।
यथात्र भस्मपङ्क्त्यां च निर्वाणं हन्त्ययं जनः ॥ ४७ ॥

ए कृष्णे । कान्ते भर्तरि । एवं सप्तमी गुप्ता । विपद्यमानतेत्यत्र विपदि कष्टे ॥

इत्यधिकरणगुप्तम् ।

इति कारकगुप्तजातिः ।

तूणेव मधुमासेऽस्मिन्सहकारकुमञ्जरी ।
इयमुन्निद्रमुकुलैर्भाति न्यस्तशिलीमुखा ॥ ४८ ॥

प्राप्तमदो मधुमासः प्रबला रुक्प्रियतमोऽपि दूरस्थः ।
असतीसंनिहितेयं संहृतशीलासखी नियतम् ॥ ४९ ॥

उन्निद्रमुकुला एः इति भिन्ने पदे क्रियेते । इः कामस्तस्य एः षष्ठ्येकवचनम् । अत्र मासः चन्द्रस्य ॥

संबन्धगुप्तम् ।

एका जातिः ।

सर्वज्ञेन त्वया किंचिन्नास्त्यविज्ञातमीदृशम् ।
मिथ्यावचस्तथा च त्वमसत्यं वेत्सि न क्वचित् ॥ ५० ॥

कमले कमले नित्यं मधूनि पिबतस्तव ।
भविष्यति न संदेहः कष्टं दोषाकरोदये ॥ ५१ ॥

सर्वं जानातीति सर्वज्ञस्तस्य इनः स्वामी तत्संबोधनं हे सर्वज्ञेन हे पण्डितश्रेष्ठ, कमले कं अले इति पदच्छेदः । हे अले हे भ्रमर ॥

इत्यामन्त्रितगुप्तम् ।

इयमप्येका जातिः ।

विषादी भैक्ष्यमश्नाति सदारोगं न मुञ्चति ।
दृष्टेनापि त्वया वीरशंभुनारिः समः कृतः ॥ ५२ ॥

नित्यमाराधिता देवैः कंसस्य द्विषतस्तनुः ।
मण्डलाग्रं गदाशङ्खं चक्रं जयति बिभ्रती ॥ ५३ ॥

विषं कालकूटं अत्ति सः विषादी । दारैः सह वर्तमानः सदारः । उभयत्र द्विती

यादितत्पुरुषः समासः । नित्यमाराधिता देवैरित्यत्र नित्यमाः नित्यं मा लक्ष्मीर्यस्यां सा । बहुव्रीहिः ॥

इति समासगुप्तम् ।

इयमेका जातिः ।

नितान्तस्वच्छहृदयं सखी प्रेयान्समागतः ।
त्वां चिरादर्शनप्रीत्या यः समालिङ्ग्य रंस्यते ॥ ५४ ॥
कलिकालमियं यावदगस्त्यस्य मुनेरपि ।
मानसं खण्डयत्यत्र शशिखण्डानुकारिणी ॥ ५५ ॥

नितान्तस्वच्छहृदयमित्यत्र नितान्तमतिशयेन स्वच्छं निर्मलं हृत् हृदयं यस्य सः नितान्तस्वच्छहृत् इति पुंलिङ्गनिर्देशः । कलिकालमियमित्यत्र इयं अगस्त्यस्य वृक्षस्य कलिका अलं अत्यन्तं मुनेः मनः खण्डयति । कलिका इति स्त्रीलिङ्गनिर्देशः ॥

इति लिङ्गगुप्तम् ।

इयमप्येका जातिः ।

प्रमोदं जनयत्येव सदारा गृहमेधिनः ।
यदि धर्मश्च कामश्च भवेतां संगताविमौ ॥ ५६ ॥

सदारा इत्यत्र राः इति प्रथमैकवचनं सुबन्तम् । गृहमेधिन इति षष्ठी ॥

सुब्वचनगुप्तम् ।

इयमेका जातिः ।

कस्मात्त्वं दुर्बलासीति सख्यस्तां परिपृच्छति ।
त्वयि संनिहिते तासु दद्यात्कथय सोत्तरम् ॥ ५७ ॥

अतिशयेन पृच्छन्तीति परिपृच्छति । इति यङ्लुगन्ते अन्तिपरतो रूपमस्ति । इदमेव रूपमेकवचनं ज्ञायते न तु बहुवचनेन अतः तिङ्वचनगुप्तम् ॥

इति तिङ्वचनगुप्तम् ।

इतिमप्येका जातिः ।

अन्योऽप्यर्थः स्फुटो यत्र मात्रादिच्युतकेष्वपि ।
प्रतीयते विदुस्तज्ज्ञास्तन्मात्राच्युतकादिकम् ॥ ५८ ॥

महाशयमतिस्वच्छं नीरं संतापशान्तये ।
खलवासादतिश्रान्ताः समाश्रयत हे जनाः ॥ ५९ ॥

यत्र प्रश्ने मात्राबिन्दुविसर्गाणां च्युतकेषु कृतेषु सत्सु द्वितीयोऽर्थः प्रकटो ज्ञायते तत् मात्रादिच्युतकादिकम् । च्युतकशब्देन कुत्रचित्स्थाने नाशः कुत्रचित् विनिमयः । 'सालटो पालटो' इति भाषा । मात्राच्युतकं आदिर्यस्मिन् तत् मात्राच्युतकादिकम् । आदिशब्देन 'मात्राबिन्दुविसर्गाणां च्युतकान्यक्षरस्य च । स्थानव्यञ्जनयोश्चापि' इति ।

एकस्मिन्नर्थे नीरं जलम् । द्वितीयेऽर्थे नीरशब्दस्य ईकारस्थाने अकारः क्रियते । तद नरं इत्यवशिष्यते ॥

तुषारधवलः स्फूर्जन्महामणिधरोऽनघः ।
नागराजो जयत्येकः पृथिवीधरणक्षमः ॥ ६० ॥

नागराजः शेषनागः एकस्मिन्नर्थे । द्वितीयेऽर्थे नागराज इत्यस्य आकारस्थाने अकारः क्रियते । तदा नगराज इति स्यात् । हिमाचलः ॥

इति मात्राच्युतकम् ।
इयमेका जातिः ।

सुश्यामा चन्दनवती कान्तातिलकभूषिता ।
कस्येषानङ्गभूः प्रीतिं भुजङ्गस्य करोति न ॥ ६१ ॥

एकस्मिन्नर्थे अनङ्गभूः कामस्य स्थानं ईदृशी स्त्री । द्वितीयेऽर्थे अठेवारो लुप्यते तदा नगभूः पर्वतस्य मलयाचलस्य भूमिः ॥

यथा सत्प्रसवः स्निग्धः सन्मार्गविहितस्थितिः ।
तथा सर्वाश्रयः सत्यमयमेव कुलद्रुमः ॥ ६२ ॥

एकस्मिन्नर्थे अयं मे मम । बकुलद्रुमः अशोकवृक्षः । बवयोरैक्यम् । द्वितीयेऽर्थे अयमेव कुलद्रुम इत्यत्रायमित्यस्मादनुस्वारस्त्याज्यः तदाऽयमेव कुलद्रुम इति स्थितम् । अयं पुमान् कुले द्रुम इव द्रुमो वृक्षः ॥

इति बिन्दुच्युतकम् ।
इयमप्येका जातिः ।

महीरुहो विज्ञानामेते हृद्यैः कलापिनाम् ।
विरुतैः स्वागतानीव नीरवाहाय कुर्वते ॥ ६३ ॥

एकस्मिन्नर्थे हृद्यैः तृतीयाविभक्तिः । मनोहरैर्विरुतैः शब्दैः । द्वितीयवारं हृद्यैरित्यत्र विसर्गलोपे कृते हृद्यैकलापिनां इति जातम् । हृद्यं सुन्दरं एकं अद्वितीयं लपन्ति वदन्ति ते हृद्यैकलापिनस्तेषां विज्ञानाम् ॥

अगस्त्यस्य मुनेः शापाद्ब्रह्मस्पन्दनमास्थितः ।
महासुः स्वात्परिभ्रष्टो नहुषः सर्पतां गतः ॥ ६४ ॥

एकवारं महासुः महान्तोऽसवः प्राणा यस्य सः । खात् आकाशात् । द्वितीयवारं सुरित्यत्र विसर्गलोपे कृते महासुखात् महच्च तत्सुखं च तस्मात् राज्यात् ॥

इति विसर्गच्युतकम् ।
इयमेका जातिः ।

महानपि सुधीरोऽपि बहुरत्नयुतोऽपि सन् ।
विरसः कुपरीवारो नदीनः केन सेव्यते ॥ ६५ ॥

नदीनां इनः स्वामी नदीनः समुद्र इत्येकस्मिन्नर्थे । द्वितीयेऽर्थे नदीन इत्यस्माद नकारः सस्वरो लुप्यते तदा दीन इति तिष्ठति । दीनशब्देन कृपणधनी पुमान् ॥

सुशीलः स्वर्णगौराङ्गः पूर्णचन्द्रनिभाननः ।
सुगतः कस्य न प्रीतिं तनोति हृदि संस्थितः ॥ ६६ ॥

एकस्मिन्नर्थे सुगतो बुद्धः जिनः । द्वितीयेऽर्थे सुगत इत्यस्मात् गकारः सस्वरो लुप्यते । तदा सुत इति स्यात् । सुतः पुत्रः ॥

इति अक्षरच्युतकम् ।

इयमप्येका जातिः ।

तनोतु ते यस्य फणी गरुत्मान् पाणौ मुरारिर्दयिता च शय्या ।
नाभौ स्फुरन्भद्रमशुभ्रदेहः पद्मागतिश्चक्रमसौ विधाता ॥ ६७ ॥
हरः क्षयी तापकरः सुरेशः शान्तो हरिर्गोत्ररिपुर्विवस्वान् ।
चन्द्रो द्विजिह्वाश्रित इत्युपेक्ष्य लक्ष्म्या वृतः पातु विधिर्जगन्ति ६८

कर्तृकर्मक्रियापदानि स्थानान्तरे धृतत्वात् अन्वयो दुर्लभो यस्य वृत्तस्य तद्वृत्तं स्थानच्युतकं कथ्यते । एवं सर्वत्रापि द्रष्टव्यम् । एवं येषां श्लोकानां मध्ये अर्थयोजनिकायां कृतायां सत्यां योजनिका स्थानान्तरे धृतास्ति यो यस्य शब्दस्यान्वयत्वेन लगति स शब्दस्तत्पार्श्वे धृतो नास्ति । अत एव स्थानच्युतकम् ॥

इति स्थानच्युतकम् ।

इयमेका जातिः ।

भिक्षवो रुचिराः सर्वे रसाः सर्वजनप्रियाः ।
क्षमायामभिसंपन्ना दृश्यन्ते मगधे परम् ॥ ६९ ॥

एकस्मिन्नर्थे भिक्षवः श्वेताम्बराः । द्वितीयेऽर्थे भिक्षव इति पदाद्भकारलोपः क्रियते तदा इक्षव इति गुडवृक्षाः ॥

सत्यशीलदयोपेतो दाता सुचिरमत्सरः ।
जिनः सर्वात्मना सेव्यः पदमुच्चैरभीप्सता ॥ ७० ॥

एकस्मिन्नर्थे जिनो वीतरागः । द्वितीयेऽर्थे जिन एतस्माज्जकारो लुप्यते तदा इन इति स्थितम् ॥

इति व्यञ्जनच्युतकम् ।

इयमेका जातिः ।

स्फोटयित्वाक्षरं किंचित्पुनरन्यस्य दानतः ।
यत्रापरो भवेदर्थश्च्युतदत्ताक्षरं हि तत् ॥ ७१ ॥

च्युते नाशे सति तस्मिन्नेव स्थाने दत्तं अक्षरमन्यत् यस्मिंस्तत् च्युतदत्ताक्षरं पृष्टम् ॥

सदागतिहतोच्छ्रायस्तमसो वश्यतां गतः ।
अस्तमेष्यति दीपोऽयं विधुरेकः शिवे स्थितः ॥ ७२ ॥
पूर्णचन्द्रमुखी रम्या कामिनी निर्मलाम्बरा ।
तनोति कस्य न स्वान्तमेकान्तमदनातुरम् ॥ ७३ ॥

एकस्मिन्नर्थे दीपः । द्वितीयेऽर्थे दीप इत्यत्र पकारं लुप्त्वा तत्स्थाने नकारो दीयते तदा दीन इति । अयं दीनो विधुश्चन्द्रः एक एव शिवे स्थितः । एकस्मिन्नर्थे कामिनी स्त्री । द्वितीयेऽर्थे यामिनी रात्रिः ॥

इति च्युतदत्ताक्षरजातिः ।

अम्बरमम्भसि[1] पत्त्रमरातिः पीतमहीनगणस्य ददाह ।
यस्य वधूस्तनयं गृहमब्जा पातु स वो हरलोचनवह्निः ॥७४॥

इति स्थानच्युतकम् ।

कृतिस्तु धर्मदासस्य सौगतस्य तपस्विनः ।
विदग्धानां मुखाम्भोजप्रविकासकरी परा ॥ ७५ ॥

इति चतुर्थः परिच्छेदः ।

इति श्रीधर्मदाससूरिविरचितं विदग्धमुखमण्डनं काव्यं सटीकं समाप्तम् ।

---

१ यस्य अम्भसि गृहं जलशायित्वात् । यस्य अम्बरं वस्त्रं पीतं नित्यं पीताम्बरपरिधानात् । अहीनः सर्पराजस्तद्गणस्यारातिर्गरुडः यस्य पत्त्रं वाहनम् । यस्य च वधूः स्त्री अब्जा लक्ष्मीः । किंच यस्य तनयं कामं हरलोचनवह्निः ददाह स विष्णुर्वः पातु । एवमस्य स्थानच्युतकस्य गतिः संपद्यते ।

